ॐ श्रीगणेशाय नमः। सच्चिदानन्दरूपाय रामाय प्रत्यगात्मने। वेदान्तप्रतिपाद्याय दशास्यघातिने नमः ॥ १ ॥
संसारसागरेमग्नं कामादिनक्रसंहृतम्। मांसमुद्धृतवन्तो येतान्वन्देस्वगुरूनपि ॥ २ ॥ आप्तवाक्यं। अल्पेभ्यश्च महद्भ्यश्च
ग्रन्थेभ्योमतिमान्नरः। सर्वतः सारमादद्यात्पुष्पेभ्यइवषट्पदः ॥ ३ ॥ वाक्यसङ्ग्रहकृद्वाक्यानि। इत्येवमादिवाक्यानामर्थं बुद्ध्वा
ह्यसादरम्। सञ्जातातुचिकीर्षामे श्रुत्यादिवाक्यसङ्ग्रहे ॥ ४ ॥ त्रिकाण्डात्मकशास्त्रस्य गीताख्यस्यतथामया। शारीरकस्यचा
प्यर्थस्सङ्क्षेपेणेहवक्ष्यते ॥ ५ ॥ शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरेस्थितम्। इति लक्षणयोगेनानिःसन्दिग्धमवस्थितः ॥ ६ ॥
एवं वेदान्तशास्त्रीयैरनुबन्धैर्भवेदिदम्। अनुबन्धियतस्तस्य प्रकरणंत्विदंस्मृतम् ॥ ७ ॥ शास्त्रीयाः केनुबन्धाःस्युरितिचे
च्छृणुतानपि। अधिकार्यभिधेयौद्वौ सम्बन्धश्च प्रयोजनम् ॥ ८ ॥ इत्येतेह्यनुबन्धावैचत्वारः सन्तिशास्त्रगाः। एतान्दृष्ट्वातु
बुद्धिमान् शास्त्रादौ सम्प्रवर्त्तते ॥ ९ ॥ चतुर्भिःसाधनैर्युक्तोयोऽधिकारीस कथ्यते। जीवस्य ब्रह्मणैक्यं यत्तद्विषयइहो
च्यते ॥ १० ॥ अशेषानर्थनाशोयो नित्यानन्दस्य चाप्तिता। प्रयोजनमिहोक्तं तत्सम्बन्धो बहुधास्मृतः ॥ ११ ॥ वेदान्तैः

प्रतिपाद्येन चैक्येन ब्रह्मजीवयोः। तेषांचविदुः सम्बन्धंबोध्यबोधकतांबुधाः॥ १२॥ वेदान्तैस्त्वैक्यबोधस्योत्पाद्योत्पादकतांवि

दुः। शास्त्रमुक्त्योस्तुसम्बन्धः प्रयोजकप्रयोज्यता॥ १३॥ बोधमुक्त्योस्तु सम्बन्धः साधनसाध्यताह्वयः। एवञ्चतुर्विधः

प्रोक्तः सम्बन्धोनबुधैःखलु॥ १४॥ ननुभेदस्य सत्यत्वादन्यस्याप्यलुप्तत्वतः। नस्याद्विषयसंसिद्धिः सिद्धोस्तुनप्रयोजनम्॥ १५॥

तदसिद्धौ चनैवस्यात्प्रवृत्तिर्धीमतामिह। भेदस्याविषयत्वेतु न वेदान्तनिबन्धता॥ १६॥ मैवम्बन्धो भिदाचापिनसत्यः

कल्पितत्वतः। ततो विषयसिद्धिः स्यात्फलसिद्धिश्च सम्भवेत्॥ १७॥ भेदबन्धद्वयोश्चापि कल्पितत्वंत्वविद्यया।

सातुचिन्मात्रमाछाद्य करोत्यत्रभिदादिकम्॥ १८॥ आछादितं परंब्रह्म स्वाज्ञानेन बलीयसा। विच्छिन्नंतत्पुनस्तेन जी

वेशजगदात्मना॥ १९॥ आवरणादिशक्त्या तत्त्समयमात्मसंसृतौ। अपरञ्चबलंतस्यात्माश्रयत्वादिकंमहत्॥ २०॥ एव

मात्मास्वयाथात्म्यमखण्डाद्वयरूपकम्। अज्ञात्वात्मन्यनात्मानमध्यस्यायं प्रवर्त्तते॥ २१॥ जगदिदमसावीशो जीवोहंविधि

नोदितः। काम्यादि कर्मणांकर्त्ता भोक्तास्मितत्फलस्य च॥ २२॥ द्रष्टाहंस्पृष्टरूपादेः श्रोतास्मि गीतवाद्ययोः। वक्ता

हंसाङ्घवेदस्य गत्वास्मिस्वगुरुंप्रति ॥ २३ ॥ मनुष्योहं पितायंमेमातेयं मेसुतोस्तिमे। युवास्म्यहंतथावृद्धो ब्राह्मणोहं बहुश्रु
तः ॥ २४ ॥ क्षत्रियोहं महांच्छूरो वैश्यश्चाहं सुखादिमान्। शूद्रोस्मि द्विजभक्तोहं ब्रह्मचार्य्यस्मिनैष्ठिकः ॥ २५ ॥ गृह
स्थः पुत्रवानस्मि पुत्रेसुखिन्यहंसुखी। पुत्रनाशेच नष्टोहं धनाढ्योहंचवैसुखी ॥ २६ ॥ पुत्रादीन्परिहायाहं वनेस्मिन्फल
पर्णभुक्। तपस्व्यहं वनस्थोस्म्य ग्निहोत्र्यतिथिप्रियः ॥ २७ ॥ यतिश्चाहंपरोहंसो मुण्डोदण्डकुसुम्भवान्। मोक्षायैव
प्रवृत्तोहं संसाराभिधपाशतः ॥ २८ ॥ इत्यादिव्यवहारोयंपण्डितमूढयोरपि। अध्यासमन्तरेणास्यनान्यत्कारणमी
क्ष्यते ॥ २९ ॥ अध्यासजननेऽज्ञानंसमर्थमेकमस्ति च। सादृश्यस्यत्वनैकान्त्यमात्मनिजातिकल्पने ॥ ३० ॥ कारणस्य
दोषस्यव्यभिचारोपि दृश्यते। घटज्ञानं ममोत्पन्नंनष्टमित्यादिकभ्रमे ॥ ३१ ॥ तस्मादाविद्यकौबन्धभेदौप्रतीचिनस्वतः।
स्वतस्त्वात्मासदाशुद्धः स्वप्रकाशोद्वयात्मकः ॥ ३२ ॥ नन्वज्ञानंकुतः शुद्धेस्वप्रकाशेचिदात्मनि। नहिसूर्येतमोदृष्टं स्वाश्रितात्
केनचित् ॥ ३३ ॥ अज्ञानेन विनानस्यादावृतिश्च चिदात्मनि। तामृतेच वदाध्यासः कथमात्मनि सम्भवेत् ॥ ३४ ॥

घूकानां तमो यथा सूर्ये ह्युलूकदृष्टिकल्पितम्। स्वप्रकाशे तथाऽज्ञानमज्ञानुभूतिकल्पितम्॥ ३५॥ यथा चाभ्रावृतः सूर्यो ऽभ्रादीनपि प्रकाशते। तथाऽज्ञानावृतोऽप्यात्मा सकार्याज्ञानभासकः॥ ३६॥ अज्ञानं स्वाश्रयानन्यविषयं स्यात्तमस्वतः। बाह्यं तमो यथाऽदृष्टं तथा चेदं ततस्तथा॥ ३७॥ आत्मस्थं सत्तदज्ञानमात्मनोऽनात्मनस्तथा। अन्योन्यन्तु मृषाऽध्या संजनयत्येवमन्यदम्॥ ३८॥ नन्वितरेतराध्यासे त्वात्मापि स्यान्मृषा ध्रुवम्। अध्यस्तत्वाद्यथा शुक्तिरूप्यं रज्जूरगादिकम्। ॥ ३९॥ आत्मनः सति मिथ्यात्वे शून्यवादः समापतेत्। मैवं वद शृणुष्वात्र व्यवस्थां ते वदाम्यहम्॥ ४०॥ नीलपृष्ठत्रिकोणत्वं यथा शुक्तेर्न भासते। तथाऽखण्डाद्वितीयत्वं भ्रान्तौ नात्मन ईक्ष्यते॥ ४१॥ शुक्तेरेवेदमंशत्वं शुक्तिरूप्ये यथेक्ष्यते। तथात्मनोऽपि चैतन्यमनात्मनि समीक्ष्यते॥ ४२॥ यथा रूप्यस्य रूप्यत्वं शुक्तीदमि प्रपश्यति। भ्रान्तो नरस्तथात्मापि कर्तृत्वाद्यात्मनीक्षते॥ ४३॥ रूप्यं यथा स्वरूपेण शुक्त्यध्यस्ततया मृषा। तथाहमादयो भावाः स्वरूपेण मृषा चिति॥ ४४॥ इदमंशस्य संसर्गो रूप्येऽध्यस्ततया मृषा। यथा तथात्मसंसर्गोऽनात्माध्यस्ततया मृषा॥ ४५॥ नीलपृष्ठत्रिकोणस्य यथा सम्यक्प्रबोधतः। ज्ञाते

रूप्यस्य मिथ्यात्वे शुक्तिरेवावशिष्यते ॥ ४६ ॥ तथाऽद्वयात्मबोधेनाऽहङ्कारादेर्मृषात्मता। शुद्धायदातदात्मैवाऽवशिष्यते सुखा
द्वयः ॥ ४७ ॥ अतो न शून्यतावादप्रसङ्गोऽत्र कथञ्चन। बाधाऽवधितयाशिष्टे चितिशून्यत्वं कथं भवेत् ॥ ४८ ॥ एवमाविद्यकः
सर्वो भोग्यादिलक्षणश्चिति। अध्यस्तत्वात्स्वरूपेण मिथ्या स्याच्छुक्तिरूप्यवत् ॥४९॥ नन्वध्यस्तस्य मिथ्यात्वं सिद्धेऽध्यासे हि सम्भ
वेत्। सोऽसिद्धो लक्षणाद्दृष्टेरिति चेत्तद्वदामि ते ॥५०॥ अध्यासो न द्विधा ज्ञेयो ज्ञानार्थाध्यासभेदतः। अन्यत्रान्यावभासादिज्ञाना
ध्यासादिलक्षणम् ॥५१॥ ततोऽज्ञानेन सम्बन्धे चिन्मात्रे परिकल्पितम्। भोक्तृभोग्यादिकं सर्वमज्ञानं चापि कल्पितम् ॥ ५२ ॥
अज्ञानमपि चिन्मात्रेऽप्यध्यस्तं नैव वस्तुतः। स्वाध्यासेऽपेक्षते नान्यत्स्वं विकल्प्य काशने यथा ॥ ५३ ॥ स्वविषयं यथैवात्मा स्वच्छाप्य
यं प्रकाशते। परमते तथाऽज्ञानं स्वं स्वकार्यञ्च निर्वहेत् ॥ ५४ ॥ चिद्रूपेऽज्ञानसिद्धौ हि मानं नैवोपलभ्यते। अज्ञोऽहमिति
बोधात्तु व्यतिरेकेण किञ्चन ॥ ५५ ॥ ततोऽज्ञानं सकार्यं स्यान्मिथ्यैव शुक्तिरूप्यवत्। एवं ह्यात्मा स्वतः शुद्धोऽतो विषयादिसि
ध्यति ॥ ५६ ॥ जीवस्य ब्रह्मणाऽभेदज्ञानं मोक्षस्य साधनम्। तयोर्भेदस्तु मिथ्यैवाऽध्यस्तत्वाच्चन्द्रभेदवत् ॥ ५७ ॥ नत

द्वितीयमस्तीति भेदासत्वं श्रुतिर्जगौ। स्वल्पंयःकुरुते भेदंतस्यापराभयंजगौ॥ ५८॥ नास्तिद्वैतं कुतोमर्त्यमित्याहस्मा
पराश्रुतिः। पञ्चधाभेदमिथ्यात्वेऽनुमानान्यपिसन्तिच॥ ५९॥ विवादाऽध्यासितो भेदोमिथ्याभवितुमर्हति। भेदत्वाद्दर्पणा
ऽब्दादौ गतमुखादिभेदवत्॥ ६०॥ विमताभेदसम्वित्त्व मिथ्याभवितुमर्हति। भेदसंवेदनत्वाद्धि स्वप्नार्थभेदधीयथा॥ ६१॥
एवंहि भेदमात्रस्य तज्ज्ञानस्यापिदर्शितम्। मिथ्यात्वंतद्विशेषाणां निषेधोप्यद्यकथ्यते॥ ६२॥ जीवात्मा ब्रह्मणोनैव तात्विक
भेदवान्सदा। सच्चिदानन्दरूपत्वादात्मत्वाच्च परेशवत्॥ ६३॥ जीवात्मा सच्चिदानन्दो वेदवाक्यप्रमाणतः। तस्मान्नहेत्व
ऽसिद्ध्यादेः शङ्कायुक्ताहकाचन॥ ६४॥ विवादाध्यासिता जीवास्तत्त्वतः प्रतिवादिनः। नभिन्ना जीवभावेनात्मत्वाद्वाप्रतिवा
दिवत्॥ ६५॥ जगज्जीवात्मनोर्भेदो नसत्यःस्यात्तुवस्तुतः। भेदत्वादिन्द्रजालान्तर्गतपदार्थभेदवत्॥ ६६॥ ईशप्रपञ्चयोश्चा
पिभेदः सत्योनवस्तुतः। भेदत्वात्स्वप्नभावानां परस्परंभिदायथा॥ ६७॥ विवादाध्यासितोभेदो जगतोपीतरेतरम्। नता
त्विकोहिभेदत्वान्मनोराज्यार्थभेदवत्॥ ६८॥ तत्त्वमस्यादिवाक्यानां बहूनांखलुवाधतः। प्रत्यक्षादिप्रसिद्धत्वादफल

त्वान्मृषात्वतः ॥ ६९ ॥ द्वैत्यादिभेदवाक्यानां नभिन्नतात्पर्य्यगोचरा । जीवादीनांततोभेदोमिथ्यैवनच संशयः ॥ ७० ॥ प्रकाशा
दिवदित्यादिसूत्रेष्वौपाधिकीभिदा । दर्शिता सूत्रकारेणभाष्यभाष्यकृतातथा ॥७१॥ ननुभेदस्यमिथ्यात्वे साङ्कर्य्यंसुखदुःखयोः
स्यादितिचेन्नभेदस्याप्यङ्गीकारादुपाधिना ॥ ७२ ॥ औपाधिकेन भेदेनस्याद्व्यवस्था सुखान्ययोः । प्रकाशेत्यादिसूत्रैश्चतामप्याह
स्मसूत्रकृत् ॥ ७३ ॥ तस्माद्भेदश्रुतिर्वाध्या वाधिकाऽभेदगाश्रुतिः । एवमुक्तंभिदाऽसत्वं वन्धस्याद्यतदुच्यते ॥ ७४ ॥ कर्तृ
त्वादिकवन्धोऽसन्नध्यस्तत्वाद्भवेत्खलु । यदित्थंतत्तथादृष्टं शुक्तिरूप्यादिकं यथा ॥ ७५ ॥ तस्माद्बुद्ध्यविवेकेनैवात्मावद्ध
इवेष्यते । स्वतस्तु सर्वदामुक्तस्तत्त्वज्ञैरवधार्यते ॥ ७६ ॥ औपाधिकन्तु कर्तृत्वाद्यात्मनिनैववास्तवम् । तद्गुणेत्यादि
सूत्राभ्यां सूत्रकृतापि दर्शितम् ॥ ७७॥ स्यादात्मासुखरूपश्च परप्रेमास्पदत्वतः । यएवंनभवेन्नासौ प्रियतमोयथाघटः । ७८ ।
सजातीयादिभेदस्य दुःखादेश्चनतत्त्वतः । ह्यात्मीयतायतस्तस्यसुसौख्यासुखात्मता ॥ ७९ ॥ सुखमत्राहमस्वाप्समिति
सुप्तेः समुत्स्थिताः । स्मरन्तिच निजानन्दं प्रत्यहं सर्वमानवाः ॥ ८० ॥ स्मृतेस्त्वनुभवाज्जन्मसंस्कारद्वारतोमतम् । अतः स्मृते

निदानस्यानुभवस्यापि मानता ॥ ८१ ॥ सौषुप्तानुभवैरेनेत्थं सिद्धात्मनः सुखात्मता । दुःखादिस्तु भवेन्मिथ्या सुप्तावनुपल
ब्धितः ॥ ८२ ॥ इत्थंवेदमूलेनानुमानेनेह दर्शिता । भेदमात्रस्य भेदानांवन्ध्यस्य च मृषात्मता ॥ ८३ ॥ जीवस्य ब्रह्मणा
ऽभेदएवं सत्युपपद्यते । ज्ञाते तस्मिंस्तदज्ञानं सविलासम्विनश्यति ॥ ८४ ॥ तस्मिन्नष्टेतुशास्त्रस्य विषयः सप्रयोजनः ।
सिद्ध्यत्येवंहि शास्त्रेऽस्मिन्धीमत्प्रवृत्तिकारणम् ॥ ८५ ॥ शास्त्रीययोस्तयोःसिद्धौ ग्रन्थस्यास्यापि सिध्यति । सफलो विषयोय
स्मात्तस्यप्रकरणंत्वयम् ॥ ८६ ॥ विषयादिविचाराख्यं ग्रन्थारम्भोपपादकम् । आद्यंप्रकरणंपूर्णं जातं रामप्रसादतः ॥ ८७ ॥
इति श्रीमुमुक्षु सर्वस्वसारसङ्ग्रहाभिधेग्रन्थे विषयाद्युपपादकं प्रथमं प्रकरणं समाप्तम् ॥ ० ॥ ० ॥

ओं। विवेकादिचतुर्भिर्हि साधनैः श्रुतिनोदितैः। सम्पन्नस्यैव शुद्धान्तःकरणस्य यतेरिह ॥ १ ॥ अधिकारोस्ति वेदान्त
श्रवणे श्रुतिचोदिते। सम्यग्ब्रह्मात्मनोरैक्यं तुर्यस्य ज्ञातुमीप्सतः ॥ २ ॥ अन्तःकरणसंशुद्धेः साधनानीह भूरिशः। वक्ष्यन्ते ता
स्विना सिद्धिर्विवेकादेर्यतो न हि ॥ ३ ॥ नन्वन्तःकरणस्यास्याच्छुद्धिः केनेह हेतुना। रागादिमलदिग्धस्य पङ्केनेव पटस्य वै ॥ ४ ॥
तदभावे विवेकादि स्यादन्तःकरणे कथम्। पङ्कलिप्ते यथा वस्त्रे दुर्लभा रागरञ्जना ॥ ५ ॥ विवेकादेरभावे च न तत्त्वज्ञानसम्भवः।
तदभावे मुधैव स्याद्वेदोक्तं सर्वसाधनम् ॥ ६ ॥ याज्ञवल्क्यस्मृतिः। मलिनो हि यथादर्शो रूपाऽऽलोकस्य न क्षमः। तथाऽवि
पक्वकरण आत्मज्ञानस्य न क्षमः। वाक्यसं०। इति स्मृत्या च सम्प्रोक्तो ज्ञानाऽभावो हि तां विना ॥ ७ ॥ शृणुत्वं सत्त्वशु
द्धेस्तु साधनं वेदसम्मतम्। फलाशां परिहृत्यादौ यत्स्वधर्माभिसेवनम् ॥ ८ ॥ पापादीनि नरस्येह सत्त्वाऽशुद्धिकराणि वै।
धर्मे गीत्यादिवाक्यानि धर्मं तन्नाशकं विदुः ॥ ९ ॥ कार्यं सत्त्वविशुद्ध्यर्थं स्ववर्णाश्रमकर्मणाम्। अनुष्ठानं यथा त्याज्यं तथा दुष्टान्नभक्ष
णम् ॥ १० ॥ अन्नमाश्रित्य तिष्ठन्ति पुंसां पापानि वै यतः। तस्मात्सत्त्वविशुद्ध्यर्थी दुष्टान्नस्याशनं त्यजेत् ॥ ११ ॥ दुष्टान्नभक्षण

स्यापि सत्वाशुद्धेर्हि हेतुता। पराशरादिभिः प्रोक्तातद्वाक्यानि लिखाम्यतः॥ १२ ॥ पराशरस्मृ०। अन्नदोषेणचित्तस्य
कालुष्यं सर्वदाभवेत्। कलुषाकृष्टचित्तानां धर्मःसम्यङ्नभासते॥ १३ ॥ दुःकृतंनिखिलंनृणामन्नाधारेव्यवस्थितम्। तस्य
प्रतिग्रहं कुर्यान्नाऽपरीक्ष्यकथञ्चन॥ १४ ॥ अकर्त्तव्यमकर्त्तव्यंप्राणैःकण्ठगतैरपि। कर्त्तव्यमेवकर्त्तव्यं प्राणैःकण्ठगतैरपि
॥ १५ ॥ याज्ञवल्क्य स्मृ०। कर्त्तव्याशयशुद्धिस्तु भिक्षुकेणविशेषतः। ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणायच॥ १६ ॥
वाक्यसं०। दृष्टान्तान्यपिचोक्तानि धर्मशास्त्रेहिमानवे। भारतेपि तथोक्तान्यनुवदाम्यनतान्यपि॥ १७ ॥ मनुः०। राजा
न्नंतेजआदत्ते शूद्रान्नं ब्रह्मवर्चसम्। आयुर्हिरण्यकारान्नं यशश्चर्मावकर्त्तिनः॥ १८ ॥ कारुकान्नंप्रजांहन्ति बलंनिर्णेजक
स्यच। गणान्नंगणिकान्नञ्च लोकेभ्यःपरिकृन्तति॥ १९ ॥ पूयंचिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्। विष्टावार्धुषिकस्यान्नं
शस्त्रविक्रयिणोमलम्॥ २०॥ नराज्ञःप्रतिगृह्णीयाद राजन्यप्रसूतितः। सूनाचक्रध्वजवतां वेशेनैवचजीवताम्॥ २१ ॥ दशसू
नासमंचक्रं दशचक्रसमोध्वजः। दशध्वजसमोवेशो दशवेशसमोनृपः॥ २२ ॥ दशसूनासहस्राणि योववहतिसौनिकः। तेन

तुल्यः स्मृतोराजा घोरस्तस्यप्रतिग्रहः॥ २३ ॥ योराज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः। सपर्य्यायेणयातीमान्नर कानेकविंशतिम्॥ २४ ॥ भारत०। दीक्षितस्यकदर्य्यस्य क्रतुविक्रयिकस्यच। तच्चाश्वमेधकर्त्तुश्चपुंश्चल्यारजकस्यच ॥ २५ ॥ वामहस्ताहृतंचान्नं भुक्तपर्युषितंचयत्। सुरानुगतमुच्छिष्ट मभोज्यंशेषितंचयत्॥ २६ ॥ समानमेकपंक्त्यांतु भोज्यमन्नंनरेश्वर। विषंहलाहलंभुङ्क्ते योऽप्रदायसुहृज्जने॥ २७ ॥ मनु०। यएतेत्वभोज्यान्नाःक्रमशः परिकीर्त्तिताः। तेषांत्वगस्थिरो माणिवदन्त्यन्नंमनीषिणः॥ २८ ॥ वाक्यसं०। क्षुधयापीड्यमानस्य मरणमापतेद्यदि। तदादुष्टान्नभुक्तौ नदोषोस्तीत्यब्रवीन्मनुः॥ २९ ॥ मनु०। जीविताऽत्ययमापन्नो योन्नमत्तियतस्ततः। आकाशमिवपङ्केन नसपापेनलिप्यते ॥ ३० ॥ वाक्यसं०। येनकेनाप्युपायेन स्वधर्मंपरिपालयेत्। इतिमन्वादितात्पर्य्यं मतोनाचविरोधता ॥ ३१ ॥ नन्वन्तःकरणस्य प्राग्यदुक्तंशुद्धिसाधनम्। स्वधर्मस्याभिसेवाख्यं तत्सम्यक्स्यात्कथंन्विह ॥ ३२ ॥ यतोलक्षणमानाभ्यां वस्तुसिद्धिःप्रमण्यते। धर्मस्यलक्षणंचातो धर्मेमानंचसंवद ॥ ३३ ॥ लक्षणंशृणुधर्मस्य तत्तमानंतथाशृणु। जैमिन्याद्यृषिवाक्याभ्यां तद्द्वयंहिवदामिते

॥ ३४ ॥ चोदनालक्षणोधर्म इति धर्मस्यलक्षणम्। श्रीमज्जैमिनिनाप्रोक्तं मानंतुमनुनेरितम् ॥ ३५ ॥ मनु०। वेदोखि
लोधर्ममूलं स्मृतिशीलेचतद्विदाम्। आचारश्चैवसाधूनामात्मनस्तुष्टिरेवच ॥ ३६ ॥ वाक्यसं०। स्वधर्मोऽनुष्ठितः सम्य
ङ्निष्कामः सत्वशुद्धिदः। स्ववर्णाद्यनुसारेण कामोह्यनर्थकारणम् ॥ ३७ ॥ कामात्मतानप्रशस्तेत्युक्तवांश्चयतोमनुः। तस्मा
त्काममपरित्यज्य कार्यंस्वधर्मसेवनम् ॥ ३८ ॥ सदाचारस्तथासेव्यो धर्ममूलोयतोस्तिसः। आचारप्रभवोधर्म इति वाक्या
त्स्मृतीरितः ॥ ३९ ॥ तथान्तःकरणस्यात्र शुद्धिंकर्त्तुमभीप्सता। निष्कामकर्मकर्त्तव्यं गीताशास्त्रानुसारतः ॥ ४० ॥ गीता०।
कायेनमनसाबुद्ध्या केवलैरिन्द्रियैरपि। योगिनःकर्मकुर्वन्ति सङ्गंत्यक्त्वाऽऽत्मशुद्धये। युक्तःकर्मफलन्त्यक्त्वाशान्तिमाप्नोतिनै
ष्ठिकीम् ॥ ४१ ॥ वाक्यसं०। नन्वेवङ्कर्मणांचास्तु सत्वशुद्धेर्हिहेतुता। तच्छुद्धेःकिंफलंप्रोक्तं यदर्थंकर्मचोद्यते ॥ ४२ ॥ शृणु
विविदिषाज्ञानं वामुख्यंकर्मणांफलं। तमेतमितिवाक्येन संयोगस्यपृथक्त्वतः ॥ ४३ ॥ स्याद्धारंसत्वशुद्धिस्तु विविदिषादिसम्भ
वे। द्वारत्वात्कर्मजत्वेन तस्यास्तत्फलतेरिता ॥ ४४ ॥ सत्वशुद्धिप्रसूतत्वं विविदिषात्मसंविदोः। अतस्तत्फलताप्यस्ति

तयोर्मुख्येतिनिश्चिनु ॥ ४५ ॥ ननुचतद्यथेत्याद्यैर्वाक्यैर्हिनिन्दितत्वतः। सत्त्वशुद्धेस्तुहेतुत्वं कर्मणांनोपपद्यते ॥ ४६ ॥ मैवमु
क्तायतःश्रुत्या भगवद्गीतयातथा। निष्कामकर्मणांपुंसः सत्त्वशुद्ध्यादिहेतुता ॥ ४७ ॥ तद्यथेत्यादिकानिन्दा साफलाशानिषे
धिका। धर्मेणेत्यादिवाक्यानि स्युस्त्वाचाशंकितोभव ॥ ४८ ॥ अविद्ययामृत्युंतीर्त्वेतिश्रुत्येत्यवगम्यते। फलेच्छांतुविनाकर्म
कृतंसत्त्वस्यशुद्धिकृत् ॥ ४९ ॥ कर्मण्येवाधिकारस्ते माफलेषुकदाचन। इत्यादिस्मृतिभिश्चापि फलाशैवनिषिध्यते ॥ ५० ॥
हृच्छुद्ध्यादेर्हिनन्वस्तु कर्मजत्वंश्रुतेर्बलात्। नात्मज्ञानस्यतद्युक्तं प्रमाणजंयतोस्तितत् ॥ ५१ ॥ विमतंह्यात्मनोज्ञानं नैवकर्मा
द्यपेक्षते। स्वोत्पत्तिंप्रतिमात्वेन घटज्ञानादिकंयथा ॥ ५२ ॥ वाक्यश्रवणमात्राद्धि तत्त्वज्ञानंयतोनृणां। तेनमोक्षोपिसंसिध्येज्
ज्ञानायातःक्रियावृथा ॥ ५३ ॥ सत्यंप्रमाणजन्यत्वं ज्ञानस्यास्माकमीप्सितम्। कर्मजत्वंतथाप्यस्य यज्ञेनेतिश्रुतेर्बलात् ॥ ५४ ॥
उत्पन्नमात्मनोज्ञानं त्वनपेक्ष्यफलंप्रति। स्वोत्पत्तिंप्रत्यपेक्षेत कर्मयोग्यतयाश्ववत् ॥ ५५ ॥ अज्ञानस्यनचोच्छेदे ज्ञानाद्भिन्न
मपेक्ष्यते। तस्योत्पत्तौतुनैवान्य द्विवेकादेरपेक्ष्यते ॥ ५६ ॥ विवेकादेस्तुसंजन्यै सत्वशुद्धिरपेक्ष्यते। सत्वशुद्धौतुनिष्काम

कर्मभ्योनान्यदिष्यते ॥ ५७ ॥ पारंपर्येणयुक्तैवं ज्ञानस्यकर्मजन्यता। साधनंस्यादतःकर्म तत्साध्यमात्मवेदनम् ॥ ५८ ॥ स्मृतिः। कषायपक्तिःकर्माणि ज्ञानंतुपरमागतिः। कषायेकर्मभिःपक्वे ततोज्ञानंप्रवर्त्तते ॥ ५९ ॥ वाक्यसं०। इत्यादि स्मृतिभिःप्रोक्ता कर्मणांज्ञानहेतुता। तस्माज्ज्ञानार्थिनातावत्कार्यायागादिकाःक्रियाः ॥ ६० ॥ वेदव्यासोपिविद्यायाः कर्मज न्त्वमुक्तवान्। सर्वापेक्षाचयज्ञादि श्रुतेरश्ववदित्यतः ॥ ६१ ॥ अशुद्धचेतसोभ्रान्त्या ज्ञानेभोगादिनाशके। भवेत्यापवतोद्वेषः प्रतिवन्धस्यसत्वतः ॥ ६२ ॥ यागाद्यैःशुद्धचित्तस्य विवेकःसत्वशुद्धिजः। जिज्ञासांसत्वलोका दौव्यनक्त्येवाशुनिर्मलाम्। तस्मा त्पापौघनाशाय कार्योधर्मोमुमुक्षुभिः ॥ ६३ ॥ ननुचित्तस्यकाऽशुद्धिर्यास्वधर्मेणनाश्यते। पापोपलेपरूपावा विषयाकारता थवा ॥ ६४ ॥ किल्विषानामनंतत्वा द्विनाज्ञानादिनाक्षयः। नसम्भवतियस्माद्धि तस्मान्नाद्यस्यसम्भवः ॥ ६५ ॥ जलादेर्द्रव तादीनां तत्सत्वेनयथाक्षयः चित्तसत्वेनतद्वत्स्या द्विषयाकारताक्षयः ॥ ६६ ॥ धर्मिणिसतिधर्मस्य ननाशोक्तिस्वभावतः। तस्मि न्नष्टेत्वयत्नेन धर्मनाशोपिसम्भवेत् ॥ ६७ ॥ द्वितीयासम्भवश्चैव मतोधर्माभिसेवने। राजाद्यादेश्वसन्त्यागेजिज्ञासोःस्याच्छ्र

मु० सा० ८

मोवृथा ॥ ६८ ॥ सत्यंकिल्बिषबाहुल्यं यत्त्वयोक्तंतथापितु । विनाब्रह्मात्मविज्ञानंयद्वद्ब्रह्मवधादिकाः ॥ ६९ ॥ अधर्मा नाशमायान्ति प्रायश्चित्ताख्यकर्मणा । तद्वद्धर्मेणसंनश्येत्पापंचित्तप्रदूषकम् ॥ ७० ॥ अतश्चित्तप्रसादस्य जनकत्वेनहेतुना । धर्मोजिज्ञासुनाकार्यो यावज्ज्ञानंनसंभवेत् ॥ ७१ ॥ भोगेनाप्यखिलाघानां यश्चादिनोदितःक्षयः । सनास्त्यभिनवंयस्मा द्भोगकालेऽघमुद्भवेत् ॥ ७२ ॥ विषयाकारताख्याया चित्तस्याशुद्धिरीरिता । सापिनाशयितुंशक्या स्वाभाविकीयतोनसा ॥ ७३ ॥ स्वार्थसंगोयथास्थूल विषयाकारतांप्रति । चित्तस्यजागरेहेतुर्हृदःस्वप्नेतथापुनः ॥ ७४ ॥ विषयाकारताहे तुर्मनोगताहिवासना । तदुभयात्ययेचित्तं सुप्तौनिर्विषयंयतः ॥ ७५ ॥ सुप्तौनलीयतेचित्तं विषयाकारतातदा । नि मित्तापगमादेव नाशंयातिह्यतिस्फुटम् ॥ ७६ ॥ सुप्तौलीयेतचेच्चित्तं नोत्थितस्यपुनर्भवः । तर्हिचित्तस्यसत्त्वातः सुप्ता वस्तीतिगम्यते ॥ ७७ ॥ तदापीतेर्हिसंसारस्यप देशादितीरयन् । श्रीव्यासोपिजगौसुप्तौ मनःसत्त्वांभवोद्भवाम् ॥ ७८ ॥ अपञ्चीकृतभूतानां सात्विकांशाद्धिनिर्मलात् । उत्पन्नंचित्तवस्तुस्या त्स्वतस्तुमलिनंकथम् ॥ ७९ ॥ सितेप्यब्दहतन्तुभ्यो

नाऽसितोजायतेपटः। विषयाकारताशुद्धिर्हृदोऽतोनैववास्तवी॥ ८०॥ अतःसमोनदृष्टान्तः पूर्वपक्षीयमुक्तवान्। द्रव
त्वादेर्ह्यवादीनां स्वभावताऽन्यगोचरा॥ ८१॥ प्रथमाऽशुद्धिनाशाय धर्मानुष्ठानमीरितम्। द्वितीयाशुद्धिनाशाय ज्ञान
शुद्धिंनिबोधत॥ ८२॥ आहारस्यैवसंशुद्धौ सत्वशुद्धिर्भवेद्ध्रुवम्। इतिछांदोग्यवाक्येन ज्ञानशुद्धिःप्रदर्शिता। ८३। हेतु
तासत्वशुद्धेर्हि तथाभाष्यकृतापिच। आहारोविषयज्ञानं भोक्तुर्भोगाययद्भवेत्। ८४। रागद्वेषादिराहित्यं तच्छुद्धिरिहो
च्यते। तस्यांसत्यांचसत्वस्यांतःकरणस्यशुद्धिता॥ ८५॥ इतिछांदोग्यवाक्यार्थः संक्षेपेणेहदर्शितः। ज्ञानशुद्धिस्त्वकर्त्त
व्या चित्तशुद्ध्यैह्यतोबुधैः॥ ८६॥ रागद्वेषादिनाचित्तं द्रुतंसद्विषयाकृतिम्। यात्यतस्तत्परित्याज्यं चित्तशुद्ध्यर्थिनासदा
॥ ८७॥ रागद्वेषौविहायैवं दृष्टान्तमन्तरंतथा। स्वधर्मश्चसदासेव्य श्चित्तशुद्ध्यर्थिभिर्जनैः॥ ८८॥ ननुघोरेकलौकाले
सर्वधर्माभिभावके। वर्णाश्रमाश्रितोधर्मः प्रायेणाऽल्पत्वमागतः॥ ८९॥ तेनचित्तस्यशुद्धिःस्यान्नैव कलियुगेनृणां। यथा
त्वल्पेनक्षारेणचक्लिन्नवस्त्रंनशुद्ध्यति। ९०। जनायतःकलावत्र प्रायेणस्त्रीपराजिताः। नानुतिष्ठंतिधर्मान्स्वान्दैवीमायाविमो

हिताः ॥ ९१ ॥ तेतुकुर्वंतिचेद्धर्मंख्यात्याद्यर्थंनचेतसः । शुद्धयेतंपरेशार्थं मर्पयंतिकलेर्वशात् ॥ ९२ ॥ नन्वल्पोपियथाव
ह्निर्दहतितृणकूटकम् । तथास्वल्पःकृतोधर्मो ऽधर्मंसनाशयेद्ध्रुवम् ॥ ९३ ॥ सत्यमेवंत्वयोक्तंस्याद्यदिधर्मःससाधितः । भवे
त्तंहिनसम्यङ्नाकलौसाधयितुंक्षमः ॥ ९४ ॥ धर्मसंकरताचापि दृश्यतेहियतःकलौ । धर्मैर्वर्णाश्रमाणांस्याच्चित्तशुद्धिरतः
कथम् ॥ ९५ ॥ ज्ञानशुद्धिस्त्वयाप्रोक्ता सापीश्वरकृपांविना । नाल्पधर्मकस्यात्र युगेह्यच्छुद्धिसाधनम् ॥ ९६ ॥ पराशरा
दिसर्वज्ञैः कलेर्बलंनिरूपितम् । स्वीयेषुधर्मशास्त्रेषु तद्वाक्यान्यनुसंब्रुवे ॥ ९७ ॥ पराशरवा० । जितोधर्मोह्यधर्मेण
जितंसत्यमनृतेनच । जिताश्चौरैश्चराजानः स्त्रीभिश्चपुरुषाःकलौ ॥ ९८ ॥ विष्णुपुराणवा० । भैक्ष्यवृत्त्यातथाशूद्राः
प्रव्रज्यालिंगिनोऽधमाः । पाखण्डसंश्रयांवृत्ति माश्रयिष्यंत्यसंस्कृताः ॥ ९९ ॥ सर्वेब्रह्मवदिष्यन्ति सम्प्राप्तेतुकलियुगे ।
नानुतिष्ठन्तिमैत्रेयशिश्नोदरपरायणाः ॥ १०० ॥ भविष्यत्पु० । गृहेगृहेपुस्तकभार भारंपुरेपुरेपण्डितयूथयूथम् । मठेमठे
तापसवृन्द वृन्दंनचब्रह्मवेत्तानच कर्मकर्त्ता ॥ १०१ ॥ भागवतपु० । तपःशौचंदयासत्य मितिपादाःकृतेकृताः । अध

मांशैस्त्रयोभग्नाः स्मयसंगमदैस्तव ॥ १०२ ॥ इदानींधर्मपादस्ते सत्यंनिर्वर्त्तयेद्यतः। तंजिघृक्षत्यधर्मोय मनृतेनैधितःक
लिः ॥ १०३ ॥ वाक्यसं०। इत्थंपराशरादीनां वाक्यैर्वर्णाश्रमाश्रितम्। धर्मंतिरस्करोत्येवा धर्मेणावर्द्धितःकलिः ॥ १०४ ॥
अतोन्यत्साधनंवाच्यं यत्कलिनाऽतिरस्कृतं। सर्वाधिकारकंयच्च सुकरंशास्त्रसंमतम् ॥ १०५ ॥ चित्तस्यशोधकंचाशुद्धिवि
धाऽशुद्धिनाशकम्। तादृक्तुसाधनंनास्तिस्याच्छुद्धिरतःकथम् ॥ १०६ ॥ मैवंभगवतोभक्ति योगोस्त्येवेश्वरेरितः। द्विवि
धाशुद्धिनाशाय श्रीमद्भागवतेखलु ॥ १०७ ॥ भक्तेश्चमहिमानैव कलिनाप्यभिभूयते। इत्युक्तंधर्मराजेन यमस्मृतौतुवैस्फु
टम् ॥ १०८ ॥ प्राणिमात्रोधिकार्य्यस्याः श्रीगीतायांसमीरितः। सुकरत्वंचभक्तेर्वै श्रीभारतेसमीरितम् ॥ १०९ ॥ पाप
कर्मादिभिश्चित्तं मालिन्यमुपढौकते। भक्तेश्चाघविरोधित्वाद्भवेच्छुद्धिहेतुता ॥ १०१० ॥ यथाऽपांक्षारयुक्तानां वस्त्रादिशुद्धि
हेतुता। इतियुक्तिस्तथैवोह्या भक्तेश्चित्तप्रशोधने ॥ १११ ॥ प्रोक्तेयंनवधात्वेन पुराणेवेदसंमता। कैर्वाक्यैरुदितंचैतदितिचे
च्छृणुतान्यपि ॥ ११२ ॥ भागवतवा०। यथाऽग्निनाहेममलंजहातिध्मातंपुनःस्वंभजतेस्वरूपं। आत्मानुकर्मानुशयंविधूय। मद्भ

क्तियोगेनभजत्यथोमाम् ॥ ११३ ॥ प्रोक्तेनभक्तियोगेन भजतोमामसकृन्मुने: । कामाहृदय्यानश्यंति सर्वेमयिहृदिस्थिते ॥ ११४ ॥
यमस्मृति: । घोरेकलियुगेप्राप्ते सर्वधर्मविवर्जिते । वासुदेवपराराजंस्तेकृतार्थानसंशय: ॥ ११५ ॥ गीता० । मांहिपार्थव्यपा
श्रित्ययेपिस्यु:पापयोनय: । स्त्रियोवैश्यास्तथा शूद्रास्तेपियांतिपरांगतिम् ॥ ११६ ॥ किंपुनर्ब्राह्मणा:पुण्या: भक्ताराजर्षयस्तथा ।
अनित्यमसुखंलोक मिमंप्राप्यभजस्वमाम् ॥ ११७ ॥ भारत० । पत्रेषुपुष्पेषुफलेषुतोये । ष्वक्रीतलभ्येषुसदैवसत्सु । भक्त्यैकलभ्ये
पुरुषेपुराणेमुक्त्यैकथंनक्रियतेप्रयत्न: ॥ ११८ ॥ भागवतवा० । श्रवणंकीर्त्तनंविष्णो: स्मरणंपादसेवनम् । अर्चनंवंदनंदास्यं
सख्यमात्मनिवेदनं ॥ ११९ ॥ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा । क्रियतेभगवत्यद्धातन्मन्येऽधीतमुत्तमम् ॥ १२० ॥ वाक्य
सं० । संकीर्त्तनाख्यभक्तेस्तु महिमाब्रह्मणोदित: । कलिसंतरणाख्यायामुपनिषद्यपिस्फुटम् ॥ १२१ ॥ तामर्थत:पठामीह तस्या
मन्त्रौचपाठत: । पठामिनु:प्रवृत्त्यर्थंभक्तौहृच्छुद्धिमीप्सत: ॥ १२२ ॥ द्वापरांतेसमभ्येत्यनारद:परिपृष्टवान् । ब्रह्माणंस्वोपदेष्टा
रंकलिसंतरणेविधिम् ॥ १२३ ॥ कथन्नुभगवंश्चाहं पृथिवींपर्यटन्सदा । संतरेयंकलिंघोरं सर्वधर्मप्रणाशकं ॥ १२४ ॥ साधुप

ष्टोस्मिसर्वासांश्रुतीनांसुरहस्यकम्। शृणुयेनकलिंत्वंत्वऽनायासात्संतरिष्यसि॥ १२५ ॥ नारायणस्यविष्णोर्वै नाम्नाभगवतोमु
ने। पप्रच्छनारदोभूयस्तन्नामभगवन्वद॥ १२६ ॥ सहोवाचशृणुष्वाद्यविष्णोर्नामानिनारद। यानिपठन्नरोयाति सलोकतादिकं
हरेः॥ १२७ ॥ मन्त्रौ। हरेराम हरेराम रामराम हरेहरे। हरेकृष्णहरेकृष्णकृष्णकृष्णहरेहरे॥ १२८ ॥ इतिषोडशकं
नाम्नांकलिकल्मषनाशनम्। नातःपरतरोपायः सर्ववेदेषुदृश्यते॥ १२९ ॥ काव्यसं०। इतिषोडशकंजप्तं जीवात्मानंविनाश
येत्। ततःप्रकाशतेब्रह्म मेघापायेरविर्यथा॥ १३० ॥ पप्रच्छनारदोभूयः कोऽस्यविधिर्जपेपितः। सहोवाचचनैवास्ति विधिरस्य
जपेसुत॥ १३१ ॥ शुचिःसन्वऽशुचिर्वासन्पठन्नेतिसलोकताम्। सामीप्यंब्रह्मणस्तद्वत्सायुज्यंचैतिवैनरः॥ १३२ ॥ षोडशक
स्यचेत्साऽर्द्धत्रिकोटिंजपतीहयः। तरतिब्रह्महत्यांसवीरहत्यांतथैवसः॥१३३॥ मुच्यतेहेमचौर्य्यात्स वृषलीगमनात्तथा। पितृ
देवमनुष्याणामृणाऽनपनयात्तथा॥१३४॥ स्वस्वधर्मपरित्याग पापात्सद्यःसमुच्यते। इत्युक्तवांस्त्रिवारंत्वऽब्जयोनिर्नारदायवै॥१३५
भक्तेर्हिमहिमायस्मा द्वेदेनापीत्थमीरितः। तस्माद्धृच्छ्रद्धयेकार्याकलौसासर्वथाबुधैः॥ १३६ ॥ कस्यभक्तिर्विधेयेतिचेच्छृणुष्ववदा

मिते। विष्णोःशिवस्यवाभक्तिर्विधेयाश्रद्धयास्वया ॥१३७॥ नरःसत्वविशुद्ध्यर्थी कलौनामानिकीर्त्तयेत्। शिवस्यवाथवाविष्णोः
स्वस्वप्रीत्यनुसारतः ॥ १३८ ॥ नतयोर्भेददृष्टिस्तुकर्त्तव्याहिकदाचन। तद्भेदद्रष्टस्यशास्त्रेषुदुःखाऽवाप्तिस्श्रुतायतः ॥ १३९ ॥ ना
रदीयपु०वा०। हरिरूपीमहादेवो लिंगरूपीजनार्द्दनः। ईषदप्यंतरंनास्तिभेदकृन्नरकंव्रजेत् ॥ १४० ॥ कर्मविपाकवा०।
योब्रह्मविष्णुरुद्राणां भेदमुत्तमभावनः। साधयेदुदरव्याधियुक्तोभवतिमानवः ॥ १४१ ॥ भविष्यपु०। विष्णोरन्यंतुपश्यंतियेमां
ब्रह्माणमेवच। कुतर्कमतयोमूढाः पच्यंतेनरकेष्वधः ॥ १४२ ॥ वाक्यसं०। यथाभेदंपरित्यज्य कार्याभक्तिर्हरीशयोः। यस्यदे
वइतिश्रुत्याभक्तिःकार्यागुरोस्तथा ॥ १४३ ॥ शिवेरुष्टेगुरुस्त्राता गुरौरुष्टेनकश्चन। इत्यादिस्मृतिवाक्यैश्चसाकार्याचित्तशुद्धये
॥ १४४ ॥ ननुलक्षणमानाभ्यांवस्तुसिद्धिर्भवेद्यतः। लक्षणंभक्तेरतोब्रूहिमानंचाप्यघनाशने ॥ १४५ ॥ शृणुवक्ष्यामिलक्षणंप्रोक्तंग्रंथेभ
क्तिरसायने। पापाद्यशुद्धिदग्धत्वंभागवतेसमीरितं ॥ १४६ ॥ मधुसूदनसरस्वतीवा०। द्रुतस्यभगवद्धर्माद्धारावाहिकतांगता।
सर्वेशेमनसोवृत्तिर्भक्तिरित्यभिधीयते। १४७। भागवतपु०। यथाऽग्निःसुसमिद्धार्चिःकरोत्येधांसिभस्मसात्। तथामद्विषया

भक्तिरुद्धवैनांसिकृत्स्नशः ॥ १४८ ॥ बाध्यमानोपिमद्भक्तो विषयैरजितेन्द्रियः । प्रायःप्रगल्भयाभक्त्याविषयैर्नाभिभूयते ॥ १४९ ॥

वाक्यसं ० । तस्माद्विभ्न्वीशयोर्भक्तिर्गुरुभक्तिस्तथैवच । वाक्कायमानसैःकार्यासत्वशुद्ध्यर्थिनासदा ॥ १५० ॥ पारंपर्येणमोक्षस्य साध

नत्वंसमीरितं । हृच्छुद्धेस्तुयतःश्रुत्याऽऽदौतांसंपादयेत्ततः ॥ १५१ ॥ श्रुतिः । चित्तस्यहिप्रसादेनहंतिकर्मशुभाऽशुभम् । प्रस

न्नात्मात्मनिस्थित्वासुखमव्ययमश्नुते ॥ १५२ ॥ वाक्यसं ० । फलाशांसर्वथाहित्वानित्यादिकर्मणांकृतिः । भगवतोगुरोस्तद्वद

जुभावेनसेवनम् ॥ १५३ ॥ दुष्टान्नाशनसंत्यागो स्नानशुद्धिस्तथैवच । चत्वार्यैतानिसत्वस्यशुद्धिहेतुतयामया ॥ १५४ ॥ साधना

निद्वितीयेऽस्मिन्श्रुतिस्मृत्यनुसारतः । निरूपितानिसेव्यानि सत्वशुद्धिमभीप्सुभिः ॥ १५५ ॥ एवंमुमुक्षु सर्वस्वसारसंग्रहनाम

के । हृच्छुद्धिसाधनानांहिग्रन्थेपूर्णंनिरूपणं ॥ १५६ ॥ २४३ ॥ इति श्रीमुमुक्षु सर्वस्वसारसंग्रहाख्येनिबंधे सत्वशुद्ध्याख्यं

द्वितीयंप्रकरणं समाप्तम् ॥ ०

ॐ शुद्धसत्वाःपुमांसोहि विवेकादीन्प्रकुर्वते। यत्स्वरूपविचारायतं श्रीराममहंभजे ॥ १ ॥ निष्कामकर्मसेवाद्यैर्हृच्छु
द्धिर्यस्यजायते। नष्टाघोघस्यतस्यैवविवेकादेर्हियोग्यता ॥ २ ॥ नित्यानित्यविवेकस्तु सुदृढोयस्यजायते। इहामुत्रार्थवैराग्यं
सम्यक्तस्यैवसम्भवेत् ॥ ३ ॥ ततःशमादिनासार्द्धंसंन्यासस्तस्यसम्भवेत्। शमादीनांहिसंपत्ते मोक्षेच्छातस्यसम्भवेत् ॥ ४ ॥ वेदां
तश्रवणस्यैव सूत्रकृदधिकारिणाम्। अथातइतिशब्दाभ्यामाद्यसूत्रेह्यसूचयत् ॥ ५ ॥ सहेतुकामनःशुद्धिर्द्वितीयेप्रागुदीरिता।
प्रथ[illegible]ातृत[illegible]स्मिन्विवेकादिप्रपंच्यते ॥ ६ ॥ म[illegible]लिनमनसःपुंसोविवेकादिसुदुर्लभम्। अतस्त्वेतच्चधीत्वाद्धीशुद्धिस्तज्जनिका
ततः ७ कारणंहिभवेत्पूर्वंकार्यंतदनंतरम्। हृच्छुद्ध्यादिनिबंधौद्वौपौर्वापर्य्यमतोऽर्हतः ॥ ८ ॥ नित्यंदृगात्मतत्त्वंहिदृश्यं
त्वनित्यमुच्यते। परोक्षोनिश्चयोह्येवंयःसविवेकउच्यते ॥ ९ ॥ श्रुतयस्तद्यथेत्याद्याविवेकेयांतिमानताम्। यत्कृतकंतदेवासदि
तिन्यायसमन्विता १०। नित्याऽनित्यविवेकस्याऽभ्यासःसम्यगनुष्ठितः। जनयत्याशुवैराग्यंशमादिषट्ककारणम्। ११। इहा
मुत्रार्थभोगेषुसक्त[illegible]स्यच[illegible] सूते[illegible]यथावह्निंर्मथितादारुदाहकम्। १२। विवेकस्यसमावृत्तिर्वसिष्ठेनप्रदर्शिता।

मोक्षधर्मेषुचाप्युक्तंविवेकाभ्यसनंमुहुः ।१३। वासिष्ठवा०। अद्ययेमहतांमूर्ध्नितेदिनैर्निपतंत्यधः। हंतचित्तमहत्तायांकेयंविश्व
स्ततातव।१४। कोटयोब्रह्मणोयातागताःसर्गपरंपराः। प्रयाताःपांशुवद्भूपाःकाधृतिर्ममजीवने।१५। येषांनिमेषणोन्मेषौज
गतांप्रलयोदयौ। तादृशाःसंतिवैनष्टामादृशांगणनैवका॥१६॥ उत्पातवायुरेवायुर्मिनाश्येवातिशश्चवः। वन्धवोवन्धनान्येवध
नान्येवातिनैधनम्॥१७॥ सुखान्येवातिदुःखानिसंपदःपरमापदः। भोगाभवमहारोगारतिरेवपराऽरतिः॥१८॥ भोगावि
षयसंभोगाभोगाएवफणावतां। दशंत्यपिमनाक्स्पृष्टादृष्टानष्टाःप्रतिक्षणम्॥१९॥भोगाशावद्धतृष्णानामपमानःपदेपदे। आलान
मवलीनानांवन्यानामिवदंतिनाम्॥२०॥ संपदःप्रमदाश्चैवतरंगोत्संगभंगुराः। कस्तास्वहिफणाछत्रछायासुरमतेवुधः॥२१॥ संसा
रराशिदुःखमेभ्न्यदेहमयेक्षमे। आस्थांचेदनुवघ्नामितन्ममास्तुधिक्स्थितिम्॥२२॥ संसारएवदुःखानांसीमांतःकिलकथ्यते।
तन्मध्यपतितेदेहेसुखमासाद्यतेकथम्॥२३॥ नतदस्तीहयदयंकालःसकलघस्मरः। ग्रसतेनजगज्जातंप्रोत्थाब्धिमिववाडवः
॥२४॥ येरम्यायेशुभारंभाःसुमेरुगुरवोपिये। कालेनविनिगीर्णास्तेगरुडेनेवपन्नगाः॥२५॥ शक्रोप्याक्रम्यतेवज्रैर्यमोपिह्रिनि

मु० यष्यते। वायुरप्येत्यऽवायुत्वं कैवास्थाममजीवने ॥ २६ ॥ परमेष्ठ्यपिनिष्ठावान्ह्रियतेहरिरप्यज:। भवोप्यऽभावमायातिकैवास्था
७१ ममजीवने ॥२७॥ अद्योत्सवोऽयंमृत्युरेषतथेहयात्रा। तेवन्ध्यव:सुखमिदंसविशेषभोगं। इत्थंमुधैवकलयन्सुविकल्पजालं। मा
लोलपेलवमतिर्गलतीहलोक:। २८ ॥ पर्णानिजीर्णानियथातरूणां। समेत्यजन्माशुलयंप्रयांति तथैवलोका:स्वविवेकहीना:
समेत्यगच्छंतिकुतोप्यहोभि: ॥ २९ ॥ कास्तादृशोयासुनसंतिदोषा: कास्तादिशोयासुनदु:खदाह:। कास्ता:प्रजायासुनभंगुरत्वं
कास्ता:क्रियायासुननाममाया ॥३०॥ स्वदंतैतावदेवैतेभावाजगतिधीमते। यावत्स्मृतिपथंयातिनविनाश:कुराक्षस: ॥३१॥ विषं
विषयवैषम्यंनविषंविषमुच्यते। जन्मांतरघ्नाविषयाएकदेहहरंविषम् ॥ ३२ ॥ मोक्षधर्मेवा ०। श्व:कार्यमद्यकुर्वीतपूर्वाह्णेचापरा
ह्णिकं। नहिप्रतीक्षतेमृत्यु:कृतमस्यनवाकृतम् ॥ ३३ ॥ तंपुत्रपशुसंपन्नंव्यासक्तमनसंनरं। सुप्तंव्याघ्रंमहौघेवमृत्युरादायगच्छति
॥ ३४ ॥ इदंकृतमिदंकार्यमिदमन्यत्कृताकृतं। एवमीहासुखासक्तंकृतांत:कुरुतेवशे ॥ ३५ ॥ जरामृत्यूहिभूतानांखादितारौ
वृकाविव। बलिनांदुर्बलानांचह्रस्वानांमहतामपि ॥ ३६ ॥ एवंभूतेषुभूतात्मानित्यभूतोऽध्रुवेषुच। कथंहिहृष्येज्जातेषुमृतेषुच

नसंज्वरेत् ॥ ३७ ॥ फेनमात्रोपमेदेहेजीवेशकुनिवत्स्थिते । अनित्येप्रियसंवासेकथंस्वपिषिपुत्रक ॥ ३८ ॥ अप्रमत्तेषुजाग्रत्सु
नित्ययुक्तेषुशत्रुषु । अंतरंलिप्समानेषुकथंनाववुध्यसे ॥ ३९ ॥ पुराशरीरमंतकोभिनत्तिरोगसारथिः । प्रसह्यजीवितक्षयेतपो
महत्समाचर ॥ ४० ॥ वाक्यसं० । वैराग्यकारणत्वेनविवेकःसंमतोविदाम् । तदभ्यासस्यसंसिद्धौवाक्योदाहरणंमुहुः ॥ ४१ ॥
अनित्यत्वादिदोषाणामालोचनंमुहुर्मुहुः । भवेनुभूतियुक्तिभ्यांविवेकाभ्यसनंस्मृतम् ॥ ४२ ॥ वैराग्यस्ययतोहेतुर्विवेकाभ्यास
उच्यते । तस्मादुक्तप्रकारेणसकार्योऽर्थजिहासुना ॥ ४३ ॥ विवेकाभ्यासंचिह्नादिवसिष्टेनोदितंतुयैः । तद्वाक्यानिलिखामीह
विवेकाद्यववुद्धये ॥ ४४ ॥ वसिष्टवा० । विचारःसफलस्तस्यविज्ञेयोयस्यसन्मतेः । दिनानुदिनमायातितानवंभोगगृध्नुता ॥४५॥
यथास्यर्शेनपवनःसत्तामायातिनोगिरा । तथेच्छातानवेनैवविवेकोस्यविवुध्यते ॥ ४६ ॥ यथादेहोपयुक्तंहिकरोत्यारोग्यमौष
धम् । तथेन्द्रियजयेभ्यस्तोविवेकःफलितोभवेत् ॥ ४७ ॥ विवेकोस्तिवचस्येवचित्तेऽग्निरिवभासुरः । यस्यतेनाऽपरित्यक्तादुःखायै
वा विवेकिता ॥ ४८ ॥ चित्तामृतंनामृतमेवविद्धि चित्तानलंनानलमेवविद्धि । चित्तांगनानूनमनंगनेति वाचाविवेकस्त्वविवेक

एव ॥४९॥ येहिप्राज्ञाःस्वऽनियताविदग्धाःशास्त्रशालिनः। रागद्वेषमयास्तेवैजम्बुकास्तेधिगस्तुतान्।५०॥ श्रूयतांज्ञानसर्वस्वं
श्रुत्वाचैवाऽवधार्य्यतां। भोगेच्छामात्रकोबंधस्तत्त्यागोमोक्षउच्यते॥५१॥ किमन्यैःशास्त्रसंदर्भैःक्रियतामिदमेवतु। यद्यत्स्वादि
हतत्सर्वंदृश्यतांविषवह्निवत्॥५२॥ पूर्वंविवेकेनतनुत्वमेति रागोथवैरंचसमूलमेव। पश्चात्परिक्षीयतएवयत्नः सपावनीयश्च
विवेकितास्ति॥५३॥ महाजडलवाधारेसंसारविषमार्णवे। इन्द्रियग्रामगहनेविवेकःपोतकोमहान्॥५४॥ धनानिनाभि
वांछ्यंतेतमांसीवविवेकिना। त्यज्यंतेविद्यमानानिसंशुष्काऽमेध्यपर्णवत्॥५५॥ वाक्यसं०। एवंविवेकचिह्नादिवसिष्ठोक्त्ये
हदर्शितम्। विवेकजंतुवैराग्यमधुनाग्रेप्रदर्श्यते॥५६॥ भोग्येषुवीततृष्णत्वंवैराग्यमितिकथ्यते। त्यक्तेषुतेष्वदैन्यंयत्तद्वैराग्य
फलंविदुः॥५७॥ ध्वांक्षोच्चारइवार्थेष्वनादरोयस्यसर्वथा। वैराग्यस्यावधिंप्राहुस्तंविरक्ताःयतीश्वराः॥५८॥ परोक्ष्येत्येवमा
द्यास्वश्रुतयोयांतिमानतां। वैराग्येमुंडकादीनांलोकादिदोषदर्शकाः॥५९॥ तदिदंशुक्रमित्याद्यागर्भोपनिषदःश्रुतिः। वैरा
ग्यार्थंजगादोच्चैर्देहजन्मक्रमंस्फुटं॥६०॥ तथागर्भस्थचिंतापितन्मंत्रैश्चप्रकाशिता। देहाद्विरागसंसिद्ध्यैभोगाधिष्ठानतोऽस्य

रात् ॥ ६१ ॥ अस्थिपंजरतोऽनित्यादसृग्विण्मूत्रभाजनात् । संगृह्णामीहतान्मंत्रान्याठक्रमानुसारतः ॥ ६२ ॥ गर्भोपनिषन्मं
त्राः । आहाराविविधाभुक्ताःपीतानानाविधाःस्तनाः । जातश्चाहंमृतश्चैवंजन्मजन्मपुनःपुनः ॥ ६३ ॥ मृतश्चाहंपुनर्जातोजा
तंपुनर्मृतः । नानायोनिसहस्राणिमयोषितानियानिवै ॥ ६४ ॥ मातरोविविधादृष्टाःपितरःसुहृदस्तथा । अवाङ्मुखपीडि
तंजंतुभिश्चसमन्वितः ॥ ६५ ॥ यन्मयापरिजनस्यार्थेकृतंकर्मशुभाऽशुभं । एकाकीतेनदह्येहंगतास्तेफलभोगिनः ॥ ६६ ॥ यदि
योन्याःप्रमुच्येहंतत्प्रपद्येपरमेश्वरं । अशुभक्षयकारकंपरिमुक्तिप्रदायकम् ॥ ६७ ॥ यदियोन्याःप्रमुच्येहंतत्प्रपद्येनारायणं । अशु
भक्ष० ॥ ६८ ॥ यदियोन्याःप्रमुच्येहंतत्सांख्यंयोगमभ्यसेत् । अशुभक्ष० ॥ ६९ ॥ वाक्यसं० । गर्भोपनिषदोह्यर्थंरामायभगवा
ञ्छिवः । प्रोक्तवांश्छिवतीतासुतद्वचांस्यनुब्रुवे ॥ ७० ॥ शिवगी० । पञ्चभूतैःसमारब्धोदेहोयंपांचभौतिकः । तत्रप्रधानंपृथिवी
शेषाणांसहकारिता ॥ ७१ ॥ जरायुजोंडजश्चैवस्वेदजश्चोद्भिजस्तथा । एवंचतुर्विधःप्रोक्तोदेहोयंपांचभौतिकः ॥ ७२ ॥ मान
सोपिपरंप्रोक्तोदेवानामेवसस्मृतः । तत्रवक्ष्येप्रथमंतुप्रधानत्वाज्जरायुजं ॥ ७३ ॥ यास्त्रीचर्मावृतिःसूक्ष्माजरायुःसानिगद्य

शुक्रशोणितसंयोगस्तस्मिन्नेवभवेद्यतः ॥ ७४ ॥ तत्रगर्भोभवेद्यस्मात्तेनप्रोक्तोजरायुजः । अंडजाःपक्षिसर्पाद्याःस्वेदजामशकाद
यः ॥ ७५ ॥ उद्भिजावृक्षगुल्माद्यामानसाश्चसुरर्षयः । जन्मकर्मवशादेवनिषक्तंस्मरमंदिरे ॥ ७६ ॥ शुक्रंरजःसमायुक्तंप्रथ
मेमासितद्द्रवं । बुद्बुदंकलिलंतस्मात्ततःपेशीभवेदिदं ॥ ७७ ॥ पेशीघनंद्वितीयेतुमासिपिंडःप्रजायते । करांघ्रिशीर्षिकादी
नितृतीयेसम्भवन्तिहि ॥ ८७ ॥ अभिव्यक्तिश्चजीवस्यचतुर्थेमासिजायते । ततश्चलतिगर्भोपिजनन्याजठरेस्वतः ॥ ७९ ॥ मातु
र्यद्विषयेलोभस्तदार्त्तोजायतेसुतः । प्रवृद्धंपंचमेचित्तंमांसशोणितपुष्टता ॥ ८० ॥ षष्ठेऽस्थिस्नायुनखरकेशलोमविविक्तता । बल
वर्णौचोपचितौसप्तमेत्वंगपूर्णता ८१ ॥ पादांतरितहस्ताभ्यांश्रोत्ररंध्रेपिधायसः । उद्विग्नोगर्भसंवासादस्तिगर्भभयाऽन्वितः
॥ ८२ ॥ आविर्भूतप्रबोधोसौगर्भदुःखादिसंयुतः । हाकष्टमितिनिर्विण्णःस्वात्मानंशुशोचत्यथ ॥ ८३ ॥ अनुभूताःपुराऽसह्या
मयामर्मच्छिदोऽसकृत् । करम्भवालुकास्तप्तायादहंत्यशुभाशयान् ॥ ८४ ॥ जठरानलसंतप्ताःपित्ताख्यारसविप्लुषः । गर्भाशये
निमग्नंतुदहंत्यतिभृशंतुमाम् ॥ ८५ ॥ औदर्यक्रिमिवक्त्राणिकूटशाल्मलिकंटकैः । तुल्यानिचतुदंत्यार्त्तंपार्श्वास्थिक्रकचार्दिं

तम् ॥ ८६ ॥ गर्भे दुर्गंधिभूयिष्ठे जठराग्निप्रदीपिते । दुःखं मयाऽऽप्तं यत्तस्मात्कनीयः कुंभिपाकजम् ॥ ८७ ॥ पूयाऽसृक्श्लेष्मपा
यित्वं वाताशित्वं च यद्भवेत् । अशुचौ क्रिमिभावश्च तत्प्राप्तं गर्भशायिना ॥ ८८ ॥ एवं स्मरन्पुरा प्राप्ता नानाजातीश्च यातनाः । मो
क्षोपायमभिध्यायन्वर्त्ततेऽभ्यासतत्परः ॥ ८९ ॥ अष्टमे त्वक्स्मृती स्यातामोजस्तेजश्च हृद्भवम् । शुद्धमापीतरक्तं च निमित्तं जीवनं मतम्
॥ ९० ॥ किंचित्कालमवस्थानं संस्कारात्पीडितांगवत् । समयः प्रसवस्य स्यान्मासेषु नवमादिषु ॥ ९१ ॥ मातुरसवहा नाडीमाश्रि
त्यावताडितः नाभिस्था नाडी गर्भस्य मातुराहाररसावहा ॥ ९२ ॥ तेन जीवति गर्भोऽपि मात्राहारेण पोषितः । अस्थियंत्रविनिष्पिष्टः प
तितः कुक्षिवर्त्मना ॥ ९३ ॥ मेदोऽसृग्दिग्धसर्वांगो जरायुपुटसंवृतः । निष्क्रामन्भृशं दुःखार्त्तो रुदन्नुच्चैरधोमुखः ॥ ९४ ॥ यन्त्रा
दिव च निर्मुक्तः पतत्युत्तानशाय्यऽधः । जातः स वायुना स्पृष्टो न स्मरति शुभाऽशुभम् ॥ ९५ ॥ वाक्यसं० । तद्वेवं गर्भदुःखानि तस्य दो
षाश्च दर्शिताः । देहाद्वैराग्यसंसिद्ध्यै तद्बीभत्साप्यथोच्यते ॥ ९६ ॥ भोगानामाश्रयो देहः स च दोषगणाऽन्वितः । विण्मूत्रास्थ्या
द्यो दोषा यतः संति शरीरगाः ॥ ९७ ॥ तस्मिन्विष्ठादिसंघाते भोक्तुं नेच्छति बुद्धिमान् । गर्त्ते विण्मति भुंक्ते कः स्थित्वा श्वादीन्वि

नापुमान् ॥ ९८ ॥ मूढस्तुतत्रभुंक्तेहिप्रत्युतविषयान्मुदा। संमूढोऽतिशिशुर्यद्वद्भुंक्तेस्वीयंमलादिकम् ॥ ९९ ॥ अस्यवाथस्य
दार्ढ्यायश्रीरामवचनान्यहं। तथाव्यासशुकादीनांसंगृह्णामिसमासत: ॥ १०० ॥ वासिष्ठेश्रीरामवा०। मांसस्नाय्वऽस्थिव
लितेशरीरपटहेऽदृढे। मार्जारवदहंताततिष्ठाम्यत्रगतध्वनौ ॥ १ ॥ कलेवरमहंकारगृहस्थस्यमहागृहं। लुठत्वप्येतुवस्थै
र्यंकिमनेनमुनेमम ॥ २ ॥ पंक्तिबद्धेन्द्रियपशुंचलत्तृष्णगृहागनम्। रागरञ्जितसर्वांगंनेष्टंदेहगृहंमम ॥ ३ ॥ चित्तभृत्यकृ
तानंतचेष्टाऽवष्टब्धसंस्थितिम्। मिथ्यामोहमहास्थूणं ने० ॥ ४ ॥ दु:खार्भककृताक्रंदंसुखशय्यामनोरमं दुरीहादग्धदासीकंने०
॥ ५ ॥ जिह्वामर्कटिकाऽऽक्रांतवदनद्वारभीषणम्। दृष्टदन्तास्थिशकलंनेष्टंदेहगृहंमम ॥ ६ ॥ मानाऽवमानबहुलावहुला
भमनोरमा:। शरीरमात्रबद्धास्थांघ्नंतिदोषदृशोनरम् ॥ ७ ॥ कायोयमचिराऽपायोबुद्बुदोंबुनिधाविव। व्यर्थंकार्यपरावर्त्तेप
रिस्फुरतिनिष्फल: ॥ ८ ॥ बद्धाऽऽस्थायेशरीरेषुबद्धास्थायेजगत्स्थितौ। तान्मोहमदिरोन्मत्तान्धिगस्तुपुन:पुन: ॥ ९ ॥ व्या
सवा०। सर्वाऽशुचिनिधानस्यकृतघ्नस्यविनाशिन:। शरीरकस्यापिकृतेमूढा:पापानिकुर्वते ॥ १० ॥ यदिनामास्यकायस्ययदन्त

स्तद्बहिर्भवेत्। दण्डमादायलोकोयंशुनःकाकांश्चवारयेत्॥११॥ शुकदेववा०। अमेध्यपूर्णेकृमिराशिसंकुलेस्वभावदुर्गंधितमेऽलम
ध्रुवे। कलेवरेमूत्रपुरीषभाजनेरमंतिमूढाविरमंतिपण्डिताः॥१२॥ बृहद्विष्णु०। मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ।
देहेचेत्प्रीतिमान्मूढोभविताानरकेपिसः॥१३॥ स्वदेहाऽशुचिगन्धेननविरज्येतयःपुमान्। वैराग्यकारणंतस्यकिमन्यदुपदिश्यते
॥१४॥ व्यासवा०। स्थानाद्बीजादुपष्टंभान्निष्यन्दान्निधनादपि। कायमाधेयशौचत्वात्पण्डिताःह्यशुचिंविदुः॥१५॥ वाक्य
सं०॥ मैत्रायणीयशाखायामपिदोषाःप्रदर्शिताः। भगवन्नस्थिचर्मस्नायुमज्जेत्यादिवाक्यतः॥१६॥ एवंभोगाश्रयाङ्गस्यगर्भेज
नौतथास्थितौ। दोषादुःखानिवेदादिप्रमाणेनेहदर्शिताः॥१७॥ तस्मात्सर्वैरुपेक्ष्योयंदेहःस्नाय्वादिपञ्जरः। तत्पुष्टिहेतुभो
ग्येषुत्याज्याचेच्छामुमुक्षुभिः॥१८॥ नन्वात्मत्वेनसर्वेषांप्रसिद्धोदेहकोयतः। दुर्लभश्चोदितस्तस्मान्नोपेक्ष्योविषयास्तथा॥१९॥
भागवते०। नृदेहमाद्यंसुलभंसुदुर्लभम् प्लवंसुकल्पंगुरुकर्णधारम्। मयानुकूलेननभस्वतेरितं पुमान्भवाब्धिंनतरेत्सआत्महा
॥२०॥ वाक्यसं०। सत्यंहिदुर्लभःसोस्तूपेक्ष्यस्तथापिसंभवेत्। अनात्मत्वाद्यथानौकानौनिर्मेयात्वधीःकथम्॥२१॥ दुर्लभ

मु०

त्वंहिशास्त्रेषुदेहस्ययत्प्रकीर्त्तितम् । तद्भवान्तरणायैवनात्मत्वेनानुपेक्षया ॥ २२ ॥ आत्मत्वेनचतंमत्वायोभोगार्थंसमीहते ।
देहस्यैवेहपुष्ट्यर्थंपशुतुल्यस्सनरःस्मृतः ॥२३॥ यदुक्तंविषयाश्चापिनोपेक्ष्याइतितन्मृषा । यतस्तदनुपेक्षायांहेतुर्नैवोपलभ्यते ॥२४॥
ननुकैश्चिन्महाभाग्यैर्लभ्यन्तेविषयायतः । अतस्तदनुपेक्षायांस्याद्धेतुर्लभ्यस्यहेतुता ॥ २५ ॥ मैवंश्वसूकरैश्चापिपापिष्ठैःसुरतादि
काः । लभ्यन्तेविषयायस्मादतस्तेनैवदुर्लभाः ॥ २६ ॥ नृदेहंदुर्लभंलब्ध्वाभोगायतंयुनक्तियः । आम्रैःप्रत्युतनुस्तस्यदर्शितामन्दभा
ग्यता ॥ २७ ॥ आमवा० । स्थाल्यांवैदूर्य्यमय्यांपचतितिलखलश्चांदनैरिन्धनौघैः । सौवर्णैर्लांगलाग्रैर्विलिखतिवसुधामर्कमूल
स्यहेतोःछित्वाकर्पूरखंडान्वृतिमिहकुरुतेकोद्रवाणांसमंतात् । प्राप्येमांकर्मभूमिंविचलतिमनुजः कस्ततोमन्दभाग्यः ॥ २८ ॥
वाक्यसं० । एवंसिद्धंह्युपेक्ष्यत्वंविषयदेहयोर्ध्रुवम् । मुमुक्षुस्तत्रागस्त्योक्त्यैस्याद्दोषदृक्तदा ॥ २९ ॥ वाल्याद्याश्चापिदेहस्याव
स्थायादुःखहेतवः । ताभ्यस्तथाविरक्तःस्यादिच्छेच्चेदात्मनोहितम् ॥ ३० ॥ ननुवाल्याभिधाऽवस्थासुखरूपाहिसंभवेत् । सर्वप्री
त्यास्पदत्वाद्धियथात्मासुखरूपकः ॥ ३१ ॥ सयथेत्याद्ययाश्रुत्यावृहदारण्यसंस्थया । सुप्तौदृष्टान्तभावेनवाल्यस्यसुखतोदिता

॥ ३२॥ सर्वंप्रीत्यास्यदत्वाद्धिवाल्यस्यसुखतेतियत्। तन्नयस्मान्नसर्वंचभ्रान्तप्रेमसुखान्वितम्॥ ३३ ॥ वातादिदोषदुष्टानांस्व
देहमर्हनादिकम्प्रीतिर्यथातथावाल्येनसासुखत्वसाधिका॥ ३४ ॥ हेतुर्विशेषणाऽसिद्धोविवेकिनाञ्चसायतः। स्वात्मान्यदृश्य
मात्रेहिक्वापिप्रीतिर्नदृश्यते॥ ३५ ॥ वाल्यस्यसुखरूपत्वंश्रुतियौदाहृतात्वया। नवाल्यस्यसुखात्मत्वंवक्तिसापिकथंचन॥ ३६ ॥
विक्षेपाऽभावमात्रांशेवालोपमातयोदिता। वक्तुंयस्मात्प्रवृत्तासाजीवस्यब्रह्मरूपताम्॥ ३७ ॥ सास्वार्थंहिकथन्त्यक्त्वावाल्यस्यसु
खतांवदेत्। उभयोर्बोधनेदोषोवाक्यभेदःसमापतेत्॥ ३८ ॥ विक्रियतेसदावाल्यंविकारिणिचशंकुतः। तस्माद्वाल्यंहिदुःखा
यसुखायनकदाचन॥ ३९ ॥ वाल्यदुःखानिदोषांश्चरामायप्राब्रवीच्छिवः। रामचन्द्रोपिवासिष्ठेवाल्यदुःखानिचोक्तवान्॥४०॥
तद्वाक्यानिलिखामीहवाद्याशंकापनुत्तये। वाक्यमानविचारेणवैराग्यस्यचसिद्धये॥ ४१ ॥ शिवगीतावा०। अकिंचिज्ज्ञस्तदावा
लोमांसपेशीसमास्थितः। श्वमार्जारादिदंष्ट्रिभ्योरक्ष्यतेदंडपाणिभिः॥ ४२ ॥ पितृवद्राक्षसंवेत्तिमातृवद्डाकिनीमपि। पूयंप
योवदज्ञातिधिक्पापिष्ठंहिशैशवं॥ ४३ ॥ श्लेष्मणापिहितानाडीसुषुम्नायावदेवतत्। व्यक्तवर्णंवचनंवैतावद्वक्तुंनशक्यते॥ ४४॥

अतएवचगर्भोपिरोदितुंनैवशक्यते ॥ वाक्यसं०॥ एवंवालोमहादुःखीतद्वत्कुमपिनत्तमः ॥ ४५ ॥ वासिष्ठ०। नमृतौनजरा
रोगेनचापदिनयौवने। तांश्चिन्ताविनिकृंतंतिहृदयंशैशवेषुयाः ॥ ४६ ॥ सर्वाणिदुःखभूतानिसर्वेदोषादुराधयः। वालमेवोप
जीवन्तिश्रीमंतमिवमानवाः ॥४७॥ वाल्यंरम्यमितिव्यर्थंवुद्धयःकल्पयन्तिये। तान्मूर्खपुरुषान्ब्रह्मन्नधिगस्तुहतचेतसः ॥ ४८ ॥
शैशवेगुरुतोभीतिर्मातृतःपितृतस्तथा। जनतोज्येष्ठवालाच्चशैशवंभयमंदिरम् ॥ ४९ ॥ वाक्यसं०। एवंवहुविधंदुःखंवाल्येनुभू
यतेजनैः। तस्माद्वाल्याद्विरज्येतस्वश्रेयश्चेदिहेच्छति ॥ ५० ॥ वाल्यान्नायौवनंयातिप्रायेणदोषसंयुतम्। यद्दोषैर्नरकंयातिरति
मत्राप्यतस्त्यजेत् ॥५१॥ दुःखान्यप्यत्रलभ्यन्तेयेषांसंख्यानविद्यते। तस्मात्ततोविरज्येतश्रेयोर्थीनरकादिव ॥५२॥ यौवनस्यचये
दोषास्तस्यदुःखानियानिच। त्यागार्थशिवरामाभ्यांसंक्षेपात्तेपिदर्शिताः ॥ ५३ ॥ तद्वाक्यानिलिखामीहविरत्यैयौवनादपि।
सर्वतःसारसंचित्यैप्रयत्नोयंयतोममं ॥ ५४ ॥ शिवगीता०। दृप्तोऽथयौवनंप्राप्यमन्मथज्वरविह्वलः। गायत्यऽकस्मादुच्चैस्तुत
थाऽकस्मात्तुवल्गति ॥ ५५ ॥ आरोहतितरून्वेगाच्छांतानुद्वेजयत्यपि। कामक्रोधमदांधःसन्नकिंचिदपिवीक्षते ॥५६॥ अस्थि

मांसशिरास्नायुवामानांमन्मथालये। उत्तानपूतिमंडूकपाटितोदरसंनिभे आसक्तःस्मरवाणाऽऽर्त्तःआत्मनादह्यतेभृशम् ॥ ५७॥
वासिष्ठवा०। असत्यंसत्यसंकाशमचिराद्विप्रलंभदम्। स्वप्नांगनासंगसमंयौवनंमेनरोचते ॥ ५८ ॥ आपातमात्ररमणंसद्भाव
रहितांतरम्। वेश्यास्त्रीसंगमप्रख्यंयौ०॥ ५९ ॥ संनिर्मलापिविस्तीर्णापावन्यपिचयौवने। मतिःकलुषतामेतिप्रावृषीवतरंगिणी
॥ ६० ॥ तावदेवविवल्गन्तिरागद्वेषपिशाचकाः। नास्तमेतिसमस्तैषायावद्यौवनयामिनी ॥ ६१ ॥ हार्दान्धकारधारिण्याभैर
वाऽकारवानपि। यौवनाऽज्ञानयामिन्याबिभेतिभगवानपि ॥ ६२ ॥ हर्षमायातियोमोहात्पुरुषःक्षणभंगिना। यौवनेनमहामु
ग्धःसवैनरमृगःस्मृतः ॥ ६३ ॥ तेपूज्यास्तेमहात्मानस्तएवपुरुषाभुवि। येसुखेनसमुत्तीर्णासाधोयौवनसंकटात् ॥ ६४॥ वाक्यसं०।
यौवनंभोक्तुमभ्येतिजरानुःशक्तिनाशिका। सर्पःसर्पांतरंयद्वद्भोक्तुमभ्येतिवैरतः ॥ ६५ ॥ यौवनेऽस्तियथादुःखन्दोषाश्चसंतिभू
रिशः। जरायांतितथासंत्यऽतस्तच्चापिरतिन्त्यजेत् ॥ ६६ ॥ ननुकामादिभिर्दोषैर्नुमास्तुयौवनेसुखम्। वार्द्धिक्येतदभावाद्वैनतद्दुः
खस्यसंभवः ॥ ६७ ॥ कार्याशक्त्याभवेद्दुःखमितिचेन्नयतःसुताः। पौत्राद्याश्चापिवृद्धस्यसन्तिकार्यकराःप्रियाः ॥ ६८ ॥ सेव्यमा

मु० ९

नसःपुत्राद्यैर्दुःखीस्यान्नकथंचन। वार्द्धिक्यान्नुरतोनैवविरागःस्यात्सुधीमतः॥ ६९॥ मैवंयतोहिवृद्धानामपिदोषास्तुचित्तगाः।
कामाद्यानैवनश्यन्त्यर्थविचारादिभिर्विना॥ ७०॥ विनावस्तुविचारेणवार्द्धिक्यमात्रतोयदि। नश्येयुस्तेतदावृद्धानवांछेयूरसा
दिकान्॥ ७१॥ वृद्धानांप्रत्युतवांछादृश्यतेहिविशेषतः। भोगैःशाम्यतिसानैवेतिभारतेसमीरितम्॥ ७२॥ भारतवा०।
नजातुकामःकामानामुपभोगेनशाम्यति। हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते॥ ७३॥ पूर्णंवर्षसहस्रंमेविषयासक्तचेतसः। तथा
प्यनुदिनंतृष्णाममैतेष्वभिजायते॥ ७४॥ जीर्यंतिजीर्यतःकेशादंताजीर्यंतिजीर्यतः। गात्राणिशिथिलायंतेतृष्णैकातरुणायते
॥ ७५॥ वाक्यसं०। जरायांवहवोदोषाःशिवादिभिरपीरिताः। श्लोकांस्तन्निर्मितानद्यविरत्यैसंलिखाम्यहम्॥ ७६॥ शिव
गीतावा०। महापरिभवस्थानंजरांप्राप्यातिदुःखितः। श्लेष्मणापिहितोरस्कोजग्धमन्नंनजीर्यति॥ ७७॥ भग्नदंतोमंददृष्टिः
कटुतिक्तकषायभुक्। वातभग्नकटिग्रीवाकरोरुचरणोऽवलः॥ ७८॥ गदायुतसमाविष्टःपरिभूतःस्वबंधुभिः। वाक्यसं०।
इतिशिवेनसंप्रोक्तापुत्राद्यैर्वृद्धतिरस्कृतिः॥ ७९॥ वृद्धस्यपुत्रपौत्राद्यैःस्यात्सुखमितियद्वचः। तन्मृषेतिशिवोक्त्याहिज्ञायतेपूर्वप

न्विताः ८० दृश्यते चाद्य लोकेऽपि प्रायेणापितरौ सुताः। वृद्धौ ह्यशक्तिकौ त्यक्त्वा सेवन्ते स्त्रीसुतादिकान् ८१ वृद्धं यथा वलीवर्दं स्वदासं चाऽप्यऽशक्तिकं। स्वामी त्यजति तद्वच्च वृद्धं दारसुतादिकाः ८२ वृद्धं पितामहं दृष्ट्वा पौत्राद्या बालकाः खलु। प्रत्युतोपहसन्त्येनं सेवन्ते प्रीततो न च ८३ आत्मवा०। अधः पश्यसि किं वृद्ध किं त्वऽपतितं भुवि। अरे मूढ न जानासि गतं मे यौवनमौक्तिकम् ८४ वाक्यसं०। इतिहासोऽपि वृद्धस्याऽऽस्यैः संप्रदर्शितस्तथा। जरायाश्च विरागाय दोषा रामेण दर्शिताः ८५ वाशिष्ठवा०। दुःप्रेक्ष्यं जठरं दीनं हीनं गुणपराक्रमैः। गृध्रो वृक्षमिवाऽऽदीर्घं गर्द्धो ह्यभ्येति वृद्धकम् ८६ दैन्यदोषमयी दीर्घा हृदि दाहप्रदायिनी। सर्वाऽऽपदामेकसखी वार्द्धके वर्द्धते स्पृहा ८७ कथं कदा मे किमिव स्वादु स्याद्भोजनं जनान्। इत्यजस्रं जरा चैषा चेतो दहति वार्द्धके ८८ काचिदस्ति जगत्यस्मिन्नामंगलकरी तथा। यथा जराऽऽक्रोशकरी देहजंगलजंबुकी ८९ वाक्यसं०। एवं दृष्ट्वा जरादोषान्विरज्येत ततः सुधीः। स्वदेहादिविरागाय मृत्युदुःखं तथा स्मरेत् ९० मृत्युदुःखानि चोक्तानि रामायश्रीशिवेन वै। तथैवा ऽपुराणेऽपि मृत्युदुःखं प्रदर्शितम् ९१ संगृह्णामि तयोश्चात्र श्लोकानप्यद्य कांश्चन। मृत्युदुःखान्यपि श्रुत्वा विरागः स्याद्यथैव नुः ९२ जरया कार्श्यमापन्नो मृत्यौ संनिहि

१० सा०

२०

तेसति। इमंदेहंपरित्यज्याऽन्यंदेहंगंतुमीप्सति ९३ यथैवशकटःसूर्पपिठरोलूखलादिभिः। संभृतोह्येतिमुंचन्वैवहूंच्छब्दांस्तथा
नरः ९४ वासनाभारसंपूर्णःजङ्घोच्छ्वासीभवेद्यदा। तदाकुर्वन्वहूंच्छब्दान्यातिदेहादितःपरम् ९५ शिवगीता०। दृष्टावाचीय
माणायांसंज्ञयाह्रियमाणया। मृत्युपाशेनबद्धस्यत्रातानैवोपलभ्यते ९६ संरुध्यमानस्तमसामहच्छिद्रमिवाविशत्। अरोदन्तदात्मा
तीनीक्षतेदीनचक्षुषा ९७ हाकांतेहाधनंपुत्राःक्रंदमानःसुदारुणम्। मंडूकइवसर्पेणमृत्युनागीर्यतेनरः ९८ अयःपाशेनकालेनस्ने
हपाशेनबंधुभिः। आत्मानंकृष्यमाणंतमीक्षतेपरितस्तथा ९९ हिक्कयाबाध्यमानस्यश्वासेनपरिशुष्यतः। मृत्युनाऽऽकृष्यमाणस्यनख
ल्वस्तिपरायणम् १०० मातापितागुरुःसुतःस्वजनोममेति मायोपमेजगतिकस्यभवेत्प्रतिज्ञा। एकोपदाव्रजतिकर्मपुरःसरोयं वि
श्रामवृक्षसदृशःखलुजीवलोकः १ सायंसायंवासवृक्षंसमेताःप्रातःप्रातस्तेनतेनप्रयांति। त्यक्त्वाऽन्योऽन्यंतंचवृक्षंविहंगाःयद्वत्तद्वज्ज्ञा
तयोऽज्ञातयश्च २ मर्मसूत्कृंत्यमानेषुमुच्यमानेषुसंधिषु। यद्दुःखंम्रियमाणस्यस्मर्यतांतन्मुमुक्षुभिः ३ आत्मपुराणवा०। द्वासप्ततिसह २०
स्राणिवृश्चिकाएकहेलया। यथादशंतिगात्रेषुपुच्छैःसूच्यग्रसंनिभैः। तथातज्जायतेदुःखंमुमूर्षोर्देहमोचने ४ कोऽप्यहंसहितास्तिस्नः

कोष्ठः सूच्यः सुतीक्ष्णकाः । यादृक्शरीरिणः कुर्युस्तादृग्दुःखं मृतौ नृणां ॥ ५ ॥ हस्तौ पादौ क्षिपंतश्च भूमिष्ठं गतचेतनं । स्वज
नास्तं तु शोचंति काकं काकायथातुरम् ॥ ६ ॥ वांधवेषु भृशं शब्दान्मुंचत्सु यमकिंकराः । नयंत्येनं यथा राजभृत्या जाता पराधकम्
॥ ७ ॥ एवमेतदनौपम्यं दुःखं दुर्मार्गवर्त्तिनाम् । यथा नरकजं दुःखं तादृग्वापि ततोधिकम् ॥ ८ ॥ मुमूर्षुर्मूर्च्छामभ्येति क्वचित्का
पि प्रवुध्यते । विभेति च भृशं दृष्ट्वा दारुणान्यमकिंकरान् ॥ ९ ॥ तएनं भर्त्सयन्त्यादावागत्य पुरतो भटाः । धिक्त्वां मनुष्यदेहस्थं पापिनं
स्वात्मघातकं । येन त्वया शरीरेण न कृतं स्वाहितं क्वचित् ॥ १० ॥ परदोषास्त्वया यद्वत्सावधानेन निश्चिताः । सर्वदैव तथात्मा किंच
णमात्रं न निश्चितः ॥ ११ ॥ अपि चेन्निर्गुणं ब्रह्म ज्ञातुं नैव भवान्क्षमः । कस्मादुपासनं तस्य न कृतं सुखदं त्वया ॥ १२ ॥ त्वत्कृतं सकलं
विद्मो दुष्कृतं यमकिंकराः । वासरादिभिरत्यर्थं श्राविनं यमसंसदि ॥ १३ ॥ वासरेणास सूर्येण कथितं दिवसाकृतं । चंद्रादिना त
था राज्या कथितं निश्यनुष्ठितं । संध्ययोरपि संध्याभ्यां सर्वदा भूतपंचकैः ॥ १४ ॥ इदं त्वया कृतं पापमेकांते चलतास्त्विदं । इतिते
मर्मस्पृक्पापं सर्वे वदंति हि ॥ १५ ॥ वासराद्याय मचराः सर्वैः सहचराः सदा । त्वादृशा यान्न जानन्ति मोहिता देवमायया ॥ १६ ॥

हृत्या । दवचनान्युक्ता । ध्वापाशैः सुदारुणैः । कशादिभिश्च संताड्य नयन्ति यमसादनम् ॥ १७ ॥ वाक्यसं० । एवं मृत्योर्हि दुःखानि
२( यैर्वाक्यै संक्षेपात्संगृहीतानि विरत्यै तानि देहतः ॥ १८ ॥ पापिनोऽङ्गाद्विरागाय दुःखानि नरकस्य च । उक्तान्यात्म
पु णार्थैः स्म वैस्ताग यनुब्रुवे ॥ १९ ॥ आत्मपुराण० । अनेकशतकोटीनां योजनानि यमालयम् । स्वल्पेनैव स कालेन नीयते यम
किंकरैः २( अत्र दुःखान्यनेकानि मृतानां यमशासनात् । भवन्ति तानि को नाम वक्तुं श्रोतुं च वा क्षमः ॥ २१ ॥ दंष्ट्रिणां शूकरादी
न्नणाम् । उपद्रवो महान्मार्गे यमराजपुरस्य हि ॥ २२ ॥ पूयविष्ठादिपूर्णानां नदीनामपि लंघनम् । निमज्जनं च
तत्रैव क्वचिन्नक्रादितो भयम् ॥ २३ ॥ वह्निशस्त्रजलेलानां वायोश्चापि विकारतः । यमालये हि नरका दुःखदाः पापकारिणाम्
२४ अनकाण पथ न्नवनादिषु । क्रूरेषु नरकेष्वेवं दुःखान्याप्नोति दुष्कृती ॥ २५ ॥ एवं स नारकं दुःखमनुभूयाथ काल
दुष्कृ ण ण । कामेतं पुनर्व्रजेत् ॥ २६ ॥ सुकृती च तथा स्वर्गे ह्यनुभूय सुखं महत् । सुकृतान्ते पतत्यस्मिल्लोके पर्जन्य
२७ लक्षैवं प्रसंगेन पुण्यस्यापीह दर्शितम् । विरत्यै भवचक्रस्य रूपञ्चाप्यत्र दर्श्यते ॥ २८ ॥ योगत

त्वोपनिषन्मंत्रा: । य: स्तन्यंपूर्वंपीत्वापिनिष्पीड्यचपयोधरान् । यस्मिन्जातोभगेपूर्वंतस्मिन्नेवभगेरमेत् ॥ २९ ॥ यामातासापुन
र्भार्यायाभार्याजननीहिसा । य:पितासपुन:पुत्रोय:पुत्र:सपुन:पिता ॥ ३० ॥ एवंसंसारचक्रेणकूपचक्रघटाइव । वाक्यसं० । भ्रमं
तोयान्तिजन्मानीतिस्रुतयोपिसंजगु: ॥३१॥ एवंदेहादिवैराग्येणजगच्चक्रस्यशान्तये । गर्भादिनिरयान्तेषुभवेद्दोषादिदृक्सुधी: ॥३२॥
तथामृत्योश्चचिह्नानितस्याऽऽगमनत:पुरा । ज्ञात्वायतेतमोक्षार्थंसुधी:शास्त्रप्रमाणत: ॥ ३३ ॥ स्कन्दपुराण० । सूतउ० । अथा
त:संप्रवक्ष्यामिसमासेननविस्तरात् । येनज्ञानविशेषेणमृत्युंपश्यन्तिदेहिन: ॥ ३४ ॥ सोमछायांध्रुवञ्चैवमहापथमरुंधतीम् ।
अपश्यन्वत्सराद्र्ध्वंनजीवतिनसंशय: ॥ ३५ ॥ कपोतोवाथगृध्रोवाकाकोवायदिमूर्द्धनि । स्थित:क्रव्यादसंज्ञोवाषण्मासेनविन
श्यति ॥ ३६ ॥ दर्पणेवाजलेवाऽपिपरेषांवाऽथचक्षुषि । अशिरस्कंतथात्मानंपश्यन्मासंनजीवति ॥ ३७ ॥ कृष्णा:कृष्णांबरा:स्वप्ने
श्यामवस्त्रधरा:स्त्रिय: । येनैवसहगच्छंतिदक्षिणांसनजीवति ॥३८॥ कृष्णैर्विकेशै:पुरुषै:स्वप्नेय:पीडित:पुमान् । पाषाणैस्ताड्यते
यस्तुमृत्युस्तस्यगृहंगत: ॥ ३९ ॥ घोषंनशृणुयात्कर्णेज्योतिर्नेत्रेनपश्यति । श्वभ्रेयोनिपतेत्स्वप्नेतस्यमृत्युर्गृहंगत: ॥ ४० ॥ यस्यवै

भुक्तमात्रस्यहृदयंपीडतेच्छुधा। जायतेदन्तघर्षश्चगतायुरत्रनसंशयः ॥ ४१ ॥ वाक्यसं० । इत्यादिस्कान्दगैःश्लोकैर्मृत्यावाऽऽगमनबोधकैः। मृत्युकालाऽपरिज्ञानाच्चिरजीवितवांछया ॥ ४२ ॥ विरागःस्यात्कथंपुंसइतिशंकानिराकृता। तस्माद्देहादितःशीघ्रंविरजेदिहबुद्धिमान् ॥ ४३ ॥ विनैवारिष्टबोधंयःप्राग्जन्माऽभ्यासतोनरः। मोक्षायशुकदेवादिवद्यतेतोत्तमःसवै ॥ ४४ ॥ विविधारिष्टबोधाद्यःपरोक्षितादिवत्पुमान्। यततेदुःखनाशायविज्ञेयःसतुमध्यमः ॥ ४५ ॥ ज्ञात्वापिमृत्युचिह्नानिभोग्यान्योनजिहासति। सचाऽधमोनरोज्ञेयःपितृविट्क्रिमिसंनिभः ॥ ४६ ॥ यानिदुःखानिजीवस्यप्रागिहदर्शितानितु। तानिदेहाभिमानेनतस्मिन्नेवातिरागिणः ॥४७॥ भवन्तिदेहिनोयस्मात्तस्माद्देहेरतिंत्यजेत्। भोगाश्रयेरतिंत्यक्त्वाभोग्येष्वपिचतांत्यजेत् ॥ ४८ ॥ सोऽकामयतजीवात्माजायामेस्यादथांगजः। मेस्याद्वित्तमितिश्रुत्याभोग्येषूक्तोरतेःक्रमः ॥ ४९ ॥ एवंत्रिविधभोग्येषुप्राथम्यंयोषितांश्रुतं। तस्मात्ताभ्योविरागार्थंस्त्रीनिन्दाताबदुच्यते ॥ ५० ॥ योषितोरूपवत्त्यास्तुडाकिनीभ्योऽधिकंभयम्। डाकिन्योघ्नन्तिवैबालान्सातुहन्त्याऽऽसयौवनान् ॥ ५१ ॥ स्त्रीसंगादुद्विजेद्व्याघ्रीसंगादप्यऽधिकंबुधः। व्याघ्रीहन्त्येकवारंहियोषिद्धंतिनरंमुहुः ॥ ५२

व्याघ्र्यऽत्तिहिनरन्दन्तैर्नार्य्यऽत्तितैर्विनापितम्। योनिरंध्रेणचाऽदन्तमदन्तमितिवैश्रुतेः॥ ५३ ॥ व्याघ्याहतोननायातिनरका
दीन्परस्त्रियः। संभोगाद्यातितान्कामीत्यादिकंभारतेस्मृतम्॥ ५४॥ भारत०। परदारानगंतव्याःसर्ववर्णेषुकर्हिचित्। नहीदृ
शमनायुष्यंलोकेकिंचनविद्यते॥५५॥ यादृशंपुरुषस्येहपरदारोपसेवनम्। यावन्तोरोमकूपाःस्युःस्त्रीणांगात्रेषुनिर्मिताः। तावद्वर्षस
हस्राणिनरकंपर्युपासते ॥५६॥ परदाराऽभिमर्षंतुकृत्वाजायतेवैवृकः। श्वशृगालस्ततोगृध्रोव्यालःकंकोवकस्तथा ॥५७॥ स्मर
णाज्जायतेकामोवधूनांधैर्यनाशनः। दर्शनाद्वचनात्स्पर्शात्कस्मादेषनसंभवेत्॥ ५८ ॥ कृत्याह्येताघोररूपामोहयन्त्यविचक्षणा
न्। रजोह्यन्तर्हितामूर्त्तिरिन्द्रियाणांसनातनी॥ ५९ ॥ अन्तकःपवनोमृत्युःपातालंवडवामुखम्। क्षुरधाराविषंसर्पोवह्निरि
त्येकतःस्त्रियः॥ ६० ॥ नाग्निस्तृप्यतिकाष्ठानांनाऽपगानांमहोदधिः। नान्तकःसर्वभूतानांनपुंसांवामलोचना॥ ६१ ॥ वाक्य
सं०। वहुनाकिमिहोक्तेनस्त्रीसंगात्सर्वदेहिनाम्। प्रायेणजायतेदुःखंस्त्रीसंगंसन्त्यजेदतः॥ ६२ ॥ स्त्रीमूलाःपण्डितैःप्रोक्ताःक्ले
शाःप्रायेणदेहिनाम्। शंभुब्रह्मादिदेवानामन्येषांकाकथानृणाम्॥ ६३ ॥ सम्भृतमोहिनीवेशंविष्णुंदृष्ट्वैवशंकरः। मोहिनीं नु

सन्धावन्कामात्तं:शुक्रमत्यजत् ॥ ६४ ॥ एवञ्चेष्टायदाजातातत:क्लेशोऽधिकोऽस्यक:। इतिस्त्रीभ्योविरत्यर्थंभागवतेसमीरि
तम् ॥ ६५ ॥ ब्रह्माचस्वसुतांदृष्ट्वाकामाद्व्याकुलतांगत:। मृगरूपेणतान्धावन्सशिवेननिवारित:। इतीशमहिमस्तोत्रेगंधर्वनि
र्मितेश्रुतम् ॥ ६६ ॥ अहल्यागमनादिंद्र:सहस्रभगवानऽभूत्। इत्यप्युक्तंपुराणेश्रीभागवतेशुकेनवै ॥ ६७ ॥ चंद्रश्चेन्द्रगुरो:पत्नीं
मातृसमांसमागमत्। तन्निमित्तंमहायुद्धमिंद्रादीनांसहासुरै: ॥ ६८ ॥ चन्द्रपक्षाश्रितै:क्रूरैश्चन्द्रेणापितथाश्रुतम्। भारतेऽ
तोमनुष्याणांस्त्रीसंगिनान्तुकाकथा ॥ ६९ ॥ ऋष्यशृङ्गस्तथाबाल्याद्ब्रह्मचारीवनेवसन्। भ्रंशितोब्रह्मचर्यात्सनारीभिरित्यपिश्रु
तम् ॥ ७० ॥ नारदोब्रह्मचारीसन्सृञ्जयाऽपत्यरागत:। शापित:पर्वतेनासौवानरमुखतांगत: ॥ ७१ ॥ भृगुपुत्रस्तथाशुक्रोमह
तितपसिस्थित:। स्वर्गस्त्रीदर्शनाद्देवसभ्रष्टोब्रह्मचर्यत: ॥७२ ॥ ब्रह्मचर्यात्परिभ्रष्ट:भुक्त्वास्वर्गस्त्रियन्तत:। लब्धवान्बहुजन्मा
नीतिवासिष्ठेसमीरितम् ॥ ७३ ॥ विश्वामित्रस्तपोनिष्ठोनुभूतस्त्रीसुखोपिसन्। स्त्रीसङ्गात्तपसोभ्रष्ट:सोऽजीजनच्छकुन्त
लाम् ॥ ७४ ॥ शतभिषाभिधोराजारागाद्गंगांगदर्शनात्। ब्रह्मणाशापितस्तस्यलोकाद्भ्रष्टोभुवंगत ॥ ७५ ॥ भुवंप्राप्यससञ्जात:

शंतनुनामकोनृपः। इतिगाथाद्वयञ्चोक्तंभारतेह्यादिपर्वणि ॥ ७६ ॥ षष्टिसहस्रसंख्याकाऋषयश्चतपोधनाः। स्वर्गस्त्रीदर्शनादे
वमुष्टिभिर्मरणंगताः ॥ ७७ ॥ मदीयेयंमदीयेयमितिवादात्परस्परम्। गीतायादशमाध्यायमहात्म्यइतिकीर्त्तितम् ॥ ७८ ॥
वृन्दायाःसङ्गतोविष्णुःसाक्षादपीश्वरःस्वयम्। पाषाणत्वंगतोहीतिश्रुतंपद्मपुराणके ॥ ७९ ॥ रामावतारमापन्नोविष्णुःस्त्रीसं
गिनास्वयम्। संदर्शयन्महाक्लेशंहासीतइतिचाब्रवीत् ॥ ८० ॥ श्रीकृष्णोपिस्वयंविष्णुर्गोपीस्कन्धेनसंवहन्। स्त्रीसंगिनांमहा
दुःखन्दर्शयामासलीलया ॥ ८१ ॥ इत्येवमादिकागाथाबह्व्यःशास्त्रेषुसंस्तुताः। तासामिदंहितात्पर्य्यंस्त्रीसंगंनात्यजेत्सुधीः ॥
८२ ॥ स्त्रीणान्दोषास्त्वनंतास्तान्वक्तुंशक्येतकःपुमान्। संक्षेपेणतथाप्यासैस्तेवैराग्यायदर्शिताः ॥ ८३ ॥ तद्वाक्यलेखनेना
चनारीदोषप्रदर्शनम्। क्रियतेहिस्वतोनाहन्तद्दोषगणनेपटुः ॥ ८४ ॥ आसवा०। अनृतंसाहसंमायामूर्खत्वमतिलोभता।
अशुचित्वंनिर्दयत्वंचस्त्रीणान्दोषाःस्वभावजाः ॥ ८५ ॥ दर्शनाद्धरतेचित्तंस्पर्शनाद्धरतेबलम्। मैथुनाद्धरतेवीर्यंनारीप्रत्यक्ष
राक्षसी ॥ ८६ ॥ भगेनचर्मखंडेनदुर्गंधेनव्रणेनवै। खंडितंहिजगत्सर्वंसदेवाऽसुरमानुषम् ॥ ८७ ॥ तचमुग्धारमन्त्येसदेवा

सुरमानवाः। तेयांतिनरकंघोरंसत्यमेवनसंशयः॥ ८८॥ गौडीपैष्टीतथामाध्वीविज्ञेयात्रिविधासुरा। चतुर्थीस्त्रीसुराज्ञे
यायथेदंमोहितंजगत्॥ ८९॥ चर्मखंडंद्विधाछिन्नमपानोद्गारवासितम्। तच्चमूढारमन्तियेप्राणैरपिधनैरपि ९०॥ स्त्रीणा
मवाच्यदेशस्यक्लिन्ननाडीव्रणस्यच। अभेदेपिमनोभेदाज्जनःप्रायेणवंच्यते॥ ९१॥ वासिष्ठवा०। सत्कारोच्छ्वासमात्रेणभुजं
गदलनोत्कया। कांतयोद्ध्रियतेजंतुःकरभ्येवोरगोविलात्॥ ९२॥ जन्मपल्वलमत्स्यानांचित्तकर्दमचारिणाम्। पुंसांदुर्वा
सनारज्जुर्नारीवडिशपिंडिका॥ ९३॥ ज्वलतामतिदूरेपिसरसाअपिनीरसा। स्त्रियोनरकाग्नीनामिन्धनंचारुदारुणं॥
९४॥ इतःकेशाइतोरक्तमितीयंप्रमदातनुः। किमेतयानिंदितयाकरोतिविपुलाशयः॥ ९५॥ वासोविलेपनैर्यानिलालिता
निपुनःपुनः। तान्यंगान्यंगलुंठंतिक्रव्यदाःसर्वदेहिनाम्॥ ९६॥ आपातरमणीयत्वंकेवलंकल्प्यतेस्त्रियः। ममतदपिनास्त्यत्र
मुनेमोहैककारणम्॥ ९७॥ सर्वेषांदोषरत्नानांसुसमुद्गिकयानया। दुःखशृंखलयानित्यमलमस्तुममस्त्रिया॥ ९८॥ यस्यस्त्री
तस्यभोगेच्छानिःस्त्रीकस्यक्वभोगभूः। स्त्रियंत्यक्त्वाजगत्यक्तंजगत्यक्त्वासुखीभवेत्॥ ९९॥ वाक्यसंग्रहकृद्वा०। सर्वै रेवातवाक्यैः

प्रागेवमेवान्ननिश्चितं। प्रायेणादेवमुख्यानांभवार्णवनिमज्जने॥ ३००॥ नाव्यौऽत्युदकचक्राणिह्यतोविवेकदारुजम्। भवाब्धेः
संतितीर्षुर्नास्तीत्यागप्लवमाश्रयेत्॥ ३०१॥ प्रायस्त्रीसङ्गिनान्दुःखंनैवतत्त्यागिनान्तुतत्। क्वचिच्छ्रुतंगुहादीनामावाल्या
द्ब्रह्मचारिणाम्॥ २॥ अन्वयव्यतिरेकाभ्यामेवंप्रायेणयोषिताम्। सङ्गाद्भवन्तिसंक्लेशाःपुंसांविकृतचेतसाम्॥ ३॥ तत्सान्निध्यं
ततस्त्यक्त्वाश्रेयोर्थीदूरतोवसेत्। नारीतत्संगिसङ्गेनचित्तंविक्रियतेयतः॥ ४॥ स्त्रीनिन्दादर्शिताह्येवंपुत्रनिन्दाथकथ्यते।
चितातोऽधिकचिन्तायाहेतुःपुत्रैषणायतः॥ ५॥ यावद्यस्यनजायेतसुतस्तावदहत्यमुम्। जन्मोत्तरंतथातातंस्वरक्षार्थंहिचि
न्तया॥ ६॥ अपुत्रःपुत्रिणोदृष्ट्वाचेत्थन्दन्दह्यतेऽनिशम्। कृतपुण्याइमेधन्याःपाप्यऽस्म्यहमपुत्रकः॥ ७॥ स्यादुपायेनयेनैवसुतो
ममापितंत्वहम्। करिष्याम्यद्ययत्नेनेवंचिन्तयतिनित्यशः॥ ८॥ सुतेच्छयासदास्तौतिविष्ण्वादीन्मोक्षदानपि। याचतेचसुतन्त्वे
व्योमखंस्वस्तक्रंनृपाद्यथा॥ ९॥ तत्प्रसादात्सुतोजातोयदिस्वारब्धसंचयात्। नष्टोबालस्तदामोहात्तेषुश्रद्धांत्यजत्ययम्॥ १०॥
सात्त्विकेषुसद्देवेषुश्रद्धान्त्यक्त्वाथराजसान्। यक्षादींस्संसेवतेमूढःसुतेच्छयात्वहर्निशम्॥ ११॥ तेभ्योपिनसुताऽऽप्तिश्चेत्तत्काताना

श्रुपण्डितान्। ज्योतिःशास्त्रस्यसंवेत्तॄन्पृच्छत्ययंमुमुक्षुवत्॥ १२॥ येनोपायेनमोविप्राश्चिरायुर्मेसुतोभवेत्। तमुपायंवदध्वंमेज्यो
तिःशास्त्रानुसारतः॥ १३॥ चिरायुर्यत्प्रसादाद्वःसुतोमेसम्भविष्यति। तमहंपूजयिष्यामिधनवाक्कायमानसैः॥ १४॥ इत्यन्तद्व
चनंश्रुत्वाग्रहपूजांवदन्तिते। वहुधनादिभिःसाध्यांतदेत्यश्चिन्तयत्ययम्॥ १५॥ इमेतुलोभिनोविप्रामद्धनंसंजिहीर्षवः। यतो
वहुधनैःसाध्यांपूजांवदन्तिमेछलात्॥ १६॥ इतिसंचिन्त्यतांस्त्यक्त्वाधनव्ययभयादयम्। सेवतेऽन्नादिदानेनभिक्षून्पुत्राशयाऽनि
शम्॥ १७॥ तेभ्योऽपिनसुताऽऽप्तिश्चेत्परित्यक्त्वाथतानपि। कुरुतेचव्रतादीन्सपुत्राशयैवसंयुतः॥ १८॥ तैरपिनसुताप्तिश्चे
त्तदाक्षुद्रान्पिशाचकान्। वेदेश्रद्धांपरित्यज्यश्मशानेष्वपिसेवते॥ १९॥ स्वद्विजत्वंसविस्मृत्यसुतोत्पत्त्यऽभिलाषया। पिशा
चसेवकानीचायद्ददन्तिकरोतितत्॥ २०॥ मांसमद्यादिकन्तेभ्योददात्यऽयंयथेप्सितम्। तदाज्ञयापिशाचान्नंश्रद्धयास्वयमत्ति
च॥ २१॥ एवंवहुविधोपायैःकश्चिद्विलभतेसुतम्। कश्चित्त्वनैवमप्येतिहीर्ष्यांचिन्तासुतेप्सूनाम्॥ २२॥ संजातेप्यंगजेतेषाञ्चि
न्ताप्रत्युतवर्द्धते। तज्जीवनायवह्निवत्पुत्रिणोदहतेतुसा॥ २३॥ भैरवशीतलादीन्सतेश्वादीन्सद्वाहनांस्तथा। अर्चन्त्यात्म

जरच्चार्थं द्विजाश्चापि परे श्ववत् ॥ २४ ॥ ननु यौवनमापन्नाः पुत्राः स्युः सुखदायिनः । इति चेन्नियमो नायं व्यभिचारस्य दर्शनात् ॥ २५ ॥
कंसो बद्ध्वाहि वृद्धं स्वपितरमुग्रसेनकम् । भूराज्यमकरोद्दुष्ट इति भागवते स्मृतम् ॥ २६ ॥ दीर्घतमऋषेः पुत्रास्तं बद्ध्वा रज्जुभिर्दृ
ढम् । नद्यां चिक्षिपुराक्रूराः स्वल्पापराधकारणात् ॥ २७ ॥ इति च भारते प्रोक्तं मार्कण्डेयपुराणके । तथोक्तवान् स्ववृत्तान्तं समा
धिनामको वणिक् ॥ २८ ॥ देवीमहात्म्ये । समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले । पुत्रदारैर्निरस्तश्च धनलोभादसा
धुभिः ॥ २९ ॥ विहीनः स्वजनैर्दारैः पुत्रैरादाय मे धनं । वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥ ३० ॥ वाक्यसं० ।
युवानः सूनवोऽप्येवं पित्रोः प्रायेण दुःखदाः । तथापि तेषु नो प्रीतिं त्यजन्ति रागिणो जनाः ॥ ३१ ॥ यथा पुत्रास्तथैवान्ये बान्धवाश्च
पिदुःखदाः । तस्मात्प्राज्ञ उपेक्षेत यूकादिवत्सुतादिकान् ॥ ३२ ॥ नन्वीशं तपसाऽऽराध्य व्यासः सुतमवाप्तवान् । सगरश्च
तथा पुत्रान् सौमदत्तिश्च तत्पिता ॥ ३३ ॥ भगवांश्चाऽऽप्तवान् कृष्णस्तपसेशप्रसादतः । पुत्रौ प्रद्युम्नसाम्बाख्यावित्यादि भारते
स्मृतम् ॥ ३४ ॥ पुत्रस्य पितुरात्मत्वात्स उपेक्ष्यः कथं भवेत् । पिता त्मा पुत्रनामेति त्यैतरेयश्रुतिर्जगौ ॥ ३५ ॥ सोऽस्यात्माऽयं सुपु

ण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्येतर आत्माऽयं कृतकृत्यो जहात्यसून् ॥ ३६ ॥ श्रुतिश्चान्या तथैवास्ति स्मृतिश्चापि यतोस्त्यतः।
कार्यो धर्मः सुतोत्पत्त्यै नोपेक्ष्योऽस्य कदाचन ॥ ३७ ॥ मंत्रः। पतिर्जायां प्रविशति गर्भो भूत्वा स्वमातरम्। तस्यां पुनर्नवो भूत्वा दशमे मा
सि जायते ॥ ३८ ॥ स्मृतिः। अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नेह च। येन केनाप्युपायेन कार्यं जन्म सुतस्य वै ॥ ३९ ॥ वाक्यसं०।
मैवं त्वदुक्तगाथानां श्रुतिस्मृत्योस्तथा पुनः। पुत्रेष्टेरर्थवादत्वात्स्वार्थे तात्पर्य्यता न हि ॥ ४० ॥ पितुरात्मैव पुत्रश्चेत्तदा कंसादिभिः
कथम्। स्वदुःखायोग्रसेनाद्या वद्धा इति त्वमीरय ॥ ४१ ॥ गतिशब्देन मोक्षो वा लोकद्वयसुखं हि वा। नाद्यः पुत्रवतां मुक्तावमुक्ताः स्युः
श्वादयोखिलाः ॥ ४२ ॥ शुकदेवगुहादीनां वंधश्च त्वन्मते भवेत्। पुत्राभावाच्छुकादीनां श्वादीनां पुत्रसत्त्वतः ॥ ४३ ॥ न द्वितीयः
कुपुत्रेषु व्यभिचारस्य दर्शनात्। धर्मेण पुत्रलाभः स्यादित्यपि नियमो न हि ॥ ४४ ॥ श्वादीनामपि दृश्यन्ते सूनवो वहवो यतः। तैस्ते
भ्यः कः कृतो धर्म इति निर्णयतो वद ॥ ४५ ॥ धर्मात्सत्पुत्रलाभः स्यादिति चेन्न यतः किल। व्यभिचारस्त्वदुक्तेस्तु भारते स्फुटमीरितः ॥
४६ ॥ भारतवा०। देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः। दशमासान्परिधृता जायन्ते कुलपांसनाः ॥ ४७ ॥ प्रसक्तः पुत्रपशुषु

धनधान्यसमाकुलः। स्नेहपाशसितोमूढोनमोक्षायकल्प्यते ॥ ४८ ॥ स्नेहेनतिलवत्सर्वंसर्गचक्रेनिपीड्यते। तिलपीडैरिवाऽऽ
क्रम्यक्लेशैरज्ञानसंभवैः ॥ ४९ ॥ जीवन्तमपिचैवैनंभरणेरक्षणेतथा। असमाप्तेपरित्यज्यपश्चादपिमरिष्यति ॥ ५० ॥ एवंविज्ञा
नंक्षोकेऽस्मिन्कःकस्येत्यभिनिश्चितः। मोक्षेनिवेशयमनइतिराज्ञेद्विजोब्रवीत् ॥ ५१ ॥ वाक्यसं०। पुत्रायस्माद्धिसर्वेषांजायंते
स्वशुभाऽशुभैः। पित्रोर्धर्मंविनातस्मादुपेक्ष्यास्तेमुमुक्षुभिः ॥ ५२ ॥ तस्मान्नृदेहमासाद्यस्वमोक्षस्याभिवांछया। यूकादिवत्सुतास्त्या
ज्याःशृङ्खलावच्चबांधवाः ॥ ५३ ॥ सुतबांधवनिन्दैवंप्रागिहसमुदीरिता। श्रौतक्रमानुसारेणवित्तनिन्दाथवक्ष्यते ॥ ५४ ॥ ननुमो
क्षोधनेनस्याच्छ्रीमतांकिन्नुदुर्लभम्। इत्यादेर्लौकिकाद्वादात्किमर्थंत्यागमाश्रयेत् ॥ ५५ ॥ नैवंमोक्षस्यसिद्धत्वान्नकेनाप्यस्तिसाध्य
ता। मोहाऽऽवृतोऽद्वयानन्दःकैश्चित्त्यागेनलभ्यते ॥ ५६ ॥ ननुज्ञानस्यवित्तेनमानजत्वान्नसाध्यता। मुक्तेस्तुधनसाध्यत्वंस्यात्सुख
त्वेनहेतुना ॥ ५७ ॥ नैवमारण्यकेश्रुत्यामैत्रेयीब्राह्मणेयतः। मोक्षस्यवित्तसाध्यत्वंसाक्षादेवनिराकृतम् ॥ ५८ ॥ अमृतत्वस्यना
शास्तिवित्तेनेत्याद्ययातथा। नधनेनाऽमृतत्वमानशुरितिजगौश्रुतिः ॥ ५९ ॥ यत्तूक्तंश्रीमतांकिन्नुदुर्लभमितितन्मृषा। क्षुद्राणय

सा० पिसुतादीनियतोधनेननैतिना ॥ ६० ॥ सृंजयश्चिन्नकेतुश्चराजानौचक्रवर्त्तिनौ । पुत्रंधनेननाऽऽप्तौतंप्राप्तौनारदवाक्यतः ॥ ६१ ॥
२७ धनेनगाधिपुत्रश्चब्राह्मण्यंनैवलब्धवान् । महतातपसातेनतत्त्वाऽवाप्तमितिश्रुतम् ॥ ६२ ॥ परीक्षितस्तथाराजानष्टायुर्ऋषिशाप
तः । धनेनलब्धवान्नायुरित्येवंभारतेश्रुतम् ॥ ६३ ॥ आरोग्यंचापिकश्चिन्नाप्नोतिधनेनवै । विचित्रवीर्यश्चासीद्धिरोगार्त्तः
शन्तनोःसुतः ॥ ६४ ॥ नाप्नोतिकाङ्क्षितंयेनतेनामृतंलभेत्कथम् । प्रयत्नेनेतिदृष्टांतोप्यत्रबोध्यःकुबेरादिभिः ॥ ६५ ॥ दृश्यन्तेधनि
नोलोकेपुत्राभावादिपीडिताः । दोषाश्चधनतद्वतांभारतादिषुहीरिताः ॥ ६६ ॥ भारतवा० । ईहाधनस्यनसुखालब्धाचिन्ता
चभूयशी । लब्धनाशोयथामृत्युर्लब्धंभवतिवानवा ॥ ६७ ॥ धननाशेमहद्दुःखंमन्येसर्वमहत्तरम् । ज्ञातयोह्यवमन्यन्तेमित्राणिच
धनाच्युतम् । धनेसुखकलायातुसापिदुःखायकेवलम् ॥ ६८ ॥ धनवान्क्रोधलोभाभ्यामाविष्टोनष्टचेतनः । तिर्यगीक्षःशुष्कमुखः
पापकोभ्रुकुटीमुखः ॥ ६९ ॥ निदशन्नधरोष्ठञ्चक्रुद्धोदारुणभाषिता । कस्तमिच्छेत्परिद्रष्टुंदातुमिच्छतिचेन्महीम् ॥ ७० ॥ वासि
ष्ठवा० । नतादृशंजगत्यस्मिन्दुःखंनरककोटिषु । यादृशंयावदायुष्कमर्थोपार्जनशासनम् ॥ ७१ ॥ भागवतवा० । अर्थस्यसा

धनेसिद्धेउत्कर्षैरक्षणेव्यये। नाशोपभोगआयासस्त्रासश्चिन्ताभ्रमोनृणाम् ॥ ७२ ॥ स्तेयंहिंसाऽनृतन्दंभःकामःक्रोधः योमदः
भिदोवैरमविश्वासःसंस्पर्द्धाव्यसनानिच ॥ ७३ ॥ एतेपञ्चदशाऽनर्थाह्यर्थमूलामतानृणाम्। तस्मादर्थमनर्थाख्यंश्रेयोऽर्थीदूरत
स्त्यजेत् ॥ ७४ ॥ वाक्यसं०। धनिनोरोगिणःप्रायोदृश्यन्तेबुद्धिवर्जिताः। राजचोरादिभ्योभीताअन्योन्यंवैरिणोभृशम् ॥ ७५ ॥
तस्माद्वित्तैषणात्याज्यापुत्रैषणेवसर्वथा। मोक्षाख्यसुखलाभायमुमुक्षुभिःप्रयत्नतः ॥ ७६ ॥ ननुविप्राणांधनाढ्यानांराजचौरादितो
स्तुभीः। राज्ञांनास्तिततोभीतिर्यतस्तेबलिनःस्वयम् ॥ ७७ ॥ तस्माद्राज्याद्विरागस्तुनकर्त्तव्यःसुखेप्सुना। इतिचेन्नयतोराज्ञां
भारतेदुःखमीरितम् ॥ ७८ ॥ भारतवा०। परतन्त्रःसदाराजास्वल्पेसोपिप्रसज्जते। संधिविग्रहयोगेषुकुतोराज्ञःस्वतन्त्रता ॥
७९ ॥ स्वसुकामोनलभतेस्वसुंकार्यार्थिभिर्जनैः। शयनेवाप्यनुज्ञातःसुप्तउत्थाप्यतेऽवशः ॥ ८० ॥ स्नाह्याऽऽलभपिबप्राश्नजुहु
ह्यग्नीन्यजेत्यपि। ब्रवीहिशृणुचापीतिविवशःकार्यतेपरैः ॥ ८१ ॥ अभिगम्याऽभिगम्यैनंयाचन्तेसततंनराः। नचाप्युत्सहतेदातुं
वित्तरक्षीमहाजनान्। ८२ ॥ दानेकोशक्षयोप्यस्यवैरञ्चाऽप्रयच्छतः। क्षणेनास्योपवर्त्तन्तेदोषावैराग्यकारकः ॥ ८३ ॥ प्राज्ञां

क्रूरांस्तथैवान्यानेकस्थानेऽपिशङ्कते। भयमप्यऽभयेराज्ञोयैश्चनित्यमुपास्यते ॥ ८४ ॥ हतोदेशःपुरन्दग्धंप्रधानःकुञ्जरोमृतः।

लोकसाधारणेष्वेषुमिथ्याज्ञानेनतप्यते ॥ ८५ ॥ अमुक्तोमानसैर्दुःखैरिच्छाद्वेषभयोद्भवैः। शिरोरोगादिभीरोगैस्तथैवाभिनि
यंत्रिभिः ॥ ८६ ॥ द्वंद्वैस्तैस्तैरुपहतःसर्वतःपरिशङ्कितः। वहुप्रत्यर्थिकंराज्यमुपास्तेगणयन्द्विशः ॥ ८७ ॥ तदल्पसुखमत्यर्थं
वहुदुःखमसारवत्। तृणाऽग्निज्वलनप्रख्यंफेनवुद्बुदसंनिभम्। कोराज्यमभिपद्येतप्राप्यचोपशमंलभेत् ॥ ८८ ॥ साहमेतानिक
र्माणिराजदुःखानिमैथिल। समर्थाशतशोवक्तुमऽथवापिसहस्रशः ॥ ८९ ॥ ततोऽब्रवीत्कुण्डधारोदिव्यंलोचनमुत्तमम्। पश्य
राज्ञांगतिंविप्रलोकांश्चैवतुचक्षुषा ॥ ९० ॥ ततोराजसहस्राणिमग्नानिनिरयेतदा। दूरादपश्यद्विप्रःसदिव्ययुक्तेनचक्षुषा ॥ ९१ ॥
वाक्यसं०। इत्थंवित्तस्यदुष्टत्वंविज्ञायभारतादितः। सन्त्यजेदैहिकंभोग्यन्तद्वच्चपारलौकिकम् ॥ ९२ ॥ नन्वैहिकस्यभोग्यस्यदुष्ट
त्वादस्तुहेयता। अदुष्टत्वान्नहेयत्वंस्वर्गभोग्यस्यसंभवेत् ॥ ९३ ॥ अपामसोमममृत्यमित्याद्याःश्रुतयोजगुः। स्वर्गभोग्यस्यनित्यत्व
त्तथादिव्यसुखात्मताम् ॥ ९४ ॥ श्रुतिः। स्वर्गेलोकेनभयंकिंचनास्तिनतत्रत्वंजरयाबिभेति। उभेतीर्त्वाऽशनायापिपासेशोका

तिगोमोदतेस्वर्गलोके ॥ ९५ ॥ वाक्यसं०। तन्नस्वर्गसुखंयस्मादनित्यमैहिकंयथा। राजसत्वाच्छ्रुतिश्चात्रप्राकृतंचयेत्युदाहृ
ता ॥ ९६ ॥ तत्सुखेतिशयश्चापिदर्शितस्तैतरेयके। सैषेत्यादिकयाश्रुत्यातोपिस्वर्गसुखंत्रयी ॥ ९७ ॥ भीतिश्चापिविराजोवै
श्रुतापितुःसकाशतः। स्वादनादिनिमित्तेनतमित्यादेर्हिवाक्यतः ॥ ९८ ॥ स्वजनकाच्चभीर्नास्तिशूकरादेरपिक्वचित्। कृते
रोषणजातेःसायाद्दृश्यासीत्प्रजापतेः ॥ ९९ ॥ तथेन्द्रार्कादिदेवानांजगदीशाद्भयंश्रुतम्। तैतरेयत्वमंत्रेणभीतानांस्यात्कुखंकु
तः ॥ ४०० ॥ मन्त्रः। भीषास्माद्वातःपवतेभीषोदेतिसूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्चमृत्युर्धावतिपञ्चमः ॥ ४०१ ॥ वाक्यसं०।
इन्द्रवातादयोह्येवंभयाऽऽविष्टायदातदा। पित्रादीनांतुभीतत्वंकिमुतन्यायदौकितम् ॥ २ ॥ प्रजापत्यादिदेवानांसंभीतत्वादि
हेतुभिः। दुःखित्वंहिविनिर्निश्चित्यनेच्छेत्स्वर्गसुखंसुधीः ॥ ३ ॥ अपामेत्यादियद्वाक्यन्तच्चिरस्थितिबोधकम्। आभूतसंप्लवंस्थानम
मृतत्वमितिस्मृतेः ॥ ४ ॥ स्वर्गइत्यादियद्वाक्यन्तद्भवेद्गुणवादकम्। स्वर्गसाधनलाभार्थंनचिकेतायतोऽब्रवीत् ॥ ५ ॥ आब्रह्मभु
वनाल्लोकाःपुनरावर्त्तिनोऽर्जुन। तेतंभुक्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकंविशन्ति। इत्यादिवचनैरीशोप्यब्रवीत्स्वःक्षयि

सा० श्रुताम् ॥ ६ ॥ स्वर्गसुखस्यदिव्यत्वंयत्पूर्वंपञ्चिणेरितम्। किंस्यात्तत्तस्यदिव्यत्वंवक्तव्यमितितेनवै ॥ ७ ॥ किंदेवैरेवभोग्यत्वंसा
२ त्विकत्वमथापिवा। उत्कर्षोऽन्यसुखाद्वास्याहिविभवत्वमेववा ॥ ८ ॥ नाद्योदैत्यायतोदेवान्जित्वास्वर्गसुखंगताः। हिरण्या
क्षादयःशूराइतिपौराणिकाजगुः ॥ ९ ॥ राक्षसारावणाद्याश्चस्वर्गसुखमवाप्नुवन्। मनुष्यानहुषाद्याश्चभुंजतेस्मदिवःसुखम् ॥
१० ॥ नद्वितीयोयतस्तस्यराजसत्वमुदीरितम्। भगवतास्वगीतासुखार्थसंयोगजत्वतः ॥ ११ ॥ गीतावा०। विषयेन्द्रियसंयो
गाद्यत्तदग्रेऽमृतोपमम्। परिणामेविषमिवतत्सुखंराजसंस्मृतम् ॥ १२ ॥ वाक्यसं०। नतृतीयोयतोनैवाप्युत्कर्षोऽस्मत्सुखाद
णुः। स्वर्गसुखस्यनिस्तृष्णैर्विचारेणोपलभ्यते ॥ १३ ॥ तैतरेयेतुयत्प्रोक्तंन्यूनाऽधिक्यंसुखस्यवै। तत्तुरागिदृशासिद्धंवैराग्यायह्य
नूदितम् ॥ १४ ॥ तत्त्वदृष्ट्यातुनैवास्तिविशेषोह्यैहिकात्सुखात्। स्वर्गभोगसुखस्यापिस्वार्थजत्वाऽविशेषतः ॥ १५ ॥ आत्मपुराण
उक्तोयमर्थोवैराग्यसिद्धये। दध्यंगाथर्वणस्योक्तेर्व्याजेनैवसमासतः ॥ १६ ॥ आत्मपुराणवा०। उत्पद्यतेसुखंयादृग्ब्रह्मणःपरमे
ष्ठिनः। विष्ठाक्रिमेस्तादृगेवस्याद्योगादिन्द्रियार्थयोः ॥ १७॥ विट्क्रिमेरपिसंत्येवह्यन्नंदाराःसुतास्तथा। ब्रह्मणोपिविशेषःस्याद

नयोः केनहेतुना ॥ १८ ॥ जायतेम्रियतेब्रह्माविट्क्रिमिश्चतथैवहि। सुखदुःखकरंतद्वत्तद्देहत्वंसमंद्वयोः ॥ १९ ॥ किंबहूक्तेन देवेन्द्रसंक्षेपेणावधारय। समःसंसारआत्माचममर्तेपिशुनोपिच ॥ २० ॥ वाक्यसंग्रहकृद्वा०। नतुरीयोयतःस्वर्गेसन्तिदोषाभयादयः। सुखवत्तेप्यहेयाःस्युःस्वर्गभवत्वमाचतः ॥ २१ ॥ तेषामहेयतानेष्टाप्राणिमात्रस्यकस्यचित्। एवंदिविभवत्वंनदिव्यत्वमपिसंभवेत् ॥ २२ ॥ तस्मादैहिकवद्धेयंस्वर्गभोगसुखंबुधैः। बहुनाकिमिहोक्तेनसर्वान्शब्दादिकांस्त्यजेत् ॥ २३ ॥ नचैकान्तेनशब्दाद्याक्कचापिसुखदायतः। स्वल्पसुखप्रदत्वेपिप्रायेणदुःखदाःसदा ॥ २४ ॥ येहिसंस्पर्शजाभोगादुःखयोनयएवते। इतिश्रीकृष्णदेवोप्यर्थानामाहस्मदुष्टतां ॥ २५ ॥ विषयवासनाकृष्टंचित्तंत्वनादिकालतः। तासांततःप्रहाणायविषयाणांमुहुर्मुहुः ॥ २६ ॥ दोषाश्चिन्त्याःप्रयत्नेनतावद्देवमुमुक्षुणा। यावन्ननाशमायान्त्यर्थेष्वखिलाहिवासनाः ॥ २७ ॥ भोगाधिष्ठानभोग्यानांदोषाःप्रागिहकीर्त्तिताः। भोगसाधनदोषास्त्वधुनोच्यन्तेसमासतः ॥ २८ ॥ इन्द्रियाणितथासत्वंभोगानांसाधनानिवै। तेषुदोषाश्चबोद्धव्यास्तेभ्योवैराग्यसिद्धये ॥ २९ ॥ स्वस्वविषयसंसक्तिःप्रमाथित्वंतथात्मनः। सदापराङ्मुखत्वंचदोषाःश्रोत्रादिषु

सा० स्थिता: ॥ ३० ॥ वाच्यऽनृतादिभाषित्वं देहीदमितिचयाचनम्। चौर्य्याद्याश्चकरांघ्र्यादौ दोषा:कर्मेन्द्रियेष्वपि ॥ ३१ ॥ काम:
३ क्रोधस्तथालोभस्तृष्णामोहमदादय:। सन्त्यन्त:करणेदोषावहवोनर्थहेतव: ॥ ३२ ॥ दुष्टै:श्रोत्रादिभिर्नैवभोक्तुर्वै स्यात्सुखंक्वचि
त्। दुष्टैरश्वैर्यथानैवरथिनोस्तिसुखंपथि ॥ ३३ ॥ भोगसाधनदोषाश्चवासिष्ठेपिप्रदर्शिता:। तद्वाक्यसंग्रहेणाचकथ्यन्तेधुना
पुन: ॥ ३४ ॥ वासिष्ठवा०। चिरमासुदुरन्तासुविषयारण्यराजिषु। इन्द्रियैर्विप्रलब्धोस्मिधूर्त्तैर्बालैरिवार्भक: ॥ ३५ ॥ आत्म
मरीण्यनार्याणिसाहसैकरतानिच। अन्धकारविहारीणिरक्षांसिस्वेन्द्रियाणिच ॥ ३६ ॥ मृदूनिपरितापीनिदृषद्दृढवलानि
च। छेदेभेदेचदक्षाणिसुशस्त्राणीन्द्रियाणिच ॥ ३७ ॥ यानिदु:खानिदीर्घाणिविषमाणिमहान्तिच। अहंकारात्प्रसूतानिता
न्यगात्खदिराइव ॥ ३८ ॥ चेत:पततिकार्येषुविहंग:स्वामिषेष्विव। क्षणेनविरतिंयातिवाल:क्रीडनकादिव ॥ ३९ ॥ भोगदू
र्वांकुराकांक्षीश्वभ्रपातमचिन्तयन्। मनोहरिणकोब्रह्मन्दूरंविपरिधावति ॥ ४० ॥ वाक्यसं०। इयमिष्टान्बहुविधान्प्रत्यर्था
नध्यवस्यति। इत्यध्यात्मभारतेदोषोवुद्धेरपिप्रदर्शित: ॥ ४१ ॥ भोगानांसाधनेष्वेवंप्राग्दोषा:समनूदिता:। भोक्तृदोषास्तथोच्य

न्तेधुनाकिंचित्समासतः ॥ ४२ ॥ भोक्तारस्त्रिविधाज्ञेयाउत्तमाधममध्यमाः । उत्तमाइन्द्रमुख्याःस्युर्दरिद्राश्चाधमाःस्मृताः ॥ ४३ ॥
मध्यमाश्चतथाज्ञेयाराजानश्चक्रवर्त्तिनः । च्यविष्णवश्चतेसर्वेज्ञेयाभोगजिहासुभिः ॥४४॥ चतुर्दशसुलोकेषुयतोभोक्तानकश्चन ।
ब्रह्मणोह्यायुषोनाशेस्थास्यत्येकमपिक्षणम् ॥ ४५ ॥ ब्रह्मरात्र्यागमेऽधःस्थाःस्वर्गलोकादिवासिनः । भोक्तारःसंप्रलीयन्तइतिपौरा
णिकाजगुः ॥ ४६ ॥ दिव्यान्भोग्यानपित्यक्त्वाप्रलीयन्तेयतोखिलाः । इन्द्रादयोपिभोक्तारस्तस्माज्जीवस्त्यजेद्धितान् ॥४७॥ एवं
भोगाश्रयांगस्यभोगसाधनभोग्ययोः । भोक्तॄणांचतथादोषाःप्रागिहसमुदीरिताः ॥ ४८ ॥ तान्दोषान्सम्यगालोच्यविरक्तो
गादिभ्योनरः । तृष्णादोषांस्तथादृष्ट्वाभोग्येषुतांस्त्यजेत्सुधीः ॥४९॥ तृष्णायाविषयैःपूर्त्तिर्नैवकैश्चित्कृतापुरा । करिष्यन्तिनचा
न्येतैर्भोग्यतृष्णांततस्त्यजेत् ॥ ५० ॥ तृष्णात्यागंविनानास्तिस्वानन्दाप्तिर्यतोनृणां । तस्मात्स्वात्मसुखप्रेप्सुस्तृष्णांशब्दादिषुत्यजेत्
॥ ५१ ॥ तृष्णायाबहवोदोषाःसन्तोक्ताभारतादिषु । तद्वाक्यानिपठाम्यत्रतृष्णात्यागस्यसिद्धये ॥ ५२ ॥ भारतवा० । यादुस्त्यजा
दुर्मतिभिर्यानजीर्यतिजीर्यतः । योसौप्राणान्तिकोरोगस्तांतृष्णांत्यजतःसुखम् ॥५३॥ यत्पृथिव्यांव्रीहियवंगोहिरण्यंपशवःस्त्रि

यः। एकस्यापिनपर्याप्तंतस्मात्तृष्णांपरित्यजेत् ॥ ५४ ॥ सूच्यासूत्रंयथावस्त्रेससारयतिवायकः। तद्वत्संसारसूत्रंहितृष्णासूच्या
निवध्यते ॥ ५५ ॥ वासिष्टवा०। अपिमेरुसमंप्राज्ञमपिशूरमपिस्थिरम्। तृणीकरोतितृष्णैकानिमेषेणनरोत्तमम् ॥ ५६ ॥
भीषयत्यपिच्चंधीरमंधयत्यपिसेच्चणाम्। खेदयत्यपिसानन्दंतृष्णाकृष्णेवशर्वरी ॥ ५७॥ च्चणमायातिपातालंच्चणमायातिनभस्तलं
च्चणंभ्रमतिदिक्कुंजेतृष्णाहृत्पद्मषट्पदी ॥ ५८ ॥ वाक्यसं०। तस्माद्विषयरागोत्थातत्त्वज्ञानाभिभाविका। तृष्णाश्रेयोर्थिना
त्याज्यागौडीपैष्टीसुरायथा ॥ ५९ ॥ विरागेणविनानैवतृष्णाहेतुत्त्वयोयतः। तस्माच्छुद्धविरागंनाकुर्यात्तृष्णाग्निशान्तये ॥ ६० ॥
सविरागःपुराणेषुचतुर्विधःप्रकीर्त्तितः। यतमानवशीकारव्यतिरेकादिभेदतः ॥ ६१ ॥ तस्मान्नृदेहमासाद्यमोक्षद्वारंसुदुर्लभं।
विषयेषुनसज्जेतविड्गर्त्तेशूकरादिवत् ॥ ६२ ॥ स्मरन्तिचेतिसूत्रेणनरकाग्निरपीरिता। पापिनोविषयासक्तेर्गर्हमत्वंचभारते ॥
६३ ॥ भारतवा०। आत्मानमात्मस्थंनवेत्तिमूढः संसारकूपेपरिवर्त्ततेयः। त्यक्त्वात्मरूपंविषयांश्चभुंक्ते सवैजनोगर्हभएवसा
त्‍वात् ॥ ६४ ॥ वाक्यसंग्रहकृद्वा०। एवंशब्दादिलाभायधीमान्नैवकदाचन। धनादिसंग्रहंकुर्याद्यदीच्छेदुत्तमंसुखम् ॥ ६५ ॥

शरीरस्थितिमात्रंनुनैंर्वसिद्ध्येद्विंयैर्विना। तानन्नादीन्स्तुगृह्णीयादितिशुकेनचेरितम्॥ ६६॥ भागवतवा०। सत्यांक्षितौकिं
कशिपोःप्रयासैर्बाहौस्वसिद्धेह्युपवर्हणैःकिं। सत्यंजलौकिंपुरुधान्नपात्र्या दिग्वल्कलादौसतिकिंदुकूलैः॥ ६७॥ चीराणि
किंपथिनसन्तिदिशन्तिभिक्षां। नैवांघ्रिपाःपरभृतःसरितोप्यशुष्यन्। रुद्धाःगुहाःकिमजितोवतिनोपसन्नान्। कस्माद्भज
न्तिकवयोधनदुर्मदांधान्॥ ६८॥ वाक्यसं०। विरागोदर्शितश्चैवमथषट्संपदुच्यते। तत्राप्याद्यःशमस्ताद्वैराग्योद्भवउच्यते॥
६९॥ शमश्चित्तप्रशांतत्वंवासनात्यागसंज्ञितम्। शुद्धाशुद्धप्रभेदेनद्विविधावासनेरिता॥ ७०॥ तयोःशुद्धाह्युपादेयादैवीसंपत्ति
रूपिणी। मलिनातुसदाहेयावासनाहृच्छमार्थिना॥ ७१॥ साचोक्तात्रिविधाप्राज्ञैस्तत्राद्यालोकवासना। द्वितीयादेहगासो
क्तातृतीयाशास्त्रवासना॥ ७२॥ परित्यागायतासांतुविचारःसाधनंपरं। एतत्सर्वंवसिष्ठेनतथान्यैश्चप्रदर्शितम्॥ ७३॥ वास
नालक्षणंचापिशमशान्तस्तुतिस्तथा। श्रीवसिष्ठेनसम्प्रोक्तातद्वाक्यानिलिखाम्यतः॥ ७४॥ वासिष्ठवा०। दृढाभ्यस्तपदार्थैक
भावनादतिचंचलं। चित्तंसंजायतेरामजरामरणकारणम्॥ ७५॥ तस्माद्वासनयाबद्धंमुक्तंनिर्वासनंमनः। रामनिर्वासनी

सा० भावमाहराशुविवेकतः॥ ७६ ॥ सम्यगालोचनात्सत्याद्वासनापरिविलीयते। वासनाविलयेचेतःशममायातिदीपवत्॥ ७७ ॥
३ दृढभावनयात्यक्तपूर्वापरविचारणं। यदादानंपदार्थस्यवासनासाप्रकीर्त्तिता॥ ७८॥ वासनाद्विविधाप्रोक्ताशुद्धाचमलिनात
था। मलिनाजन्महेतुःस्याच्छुद्धाजन्मविनाशिनी॥ ७९ ॥ मानसीर्वासनाःपूर्वंत्यक्त्वाविषयवासनाः। मैत्र्यादिवासनारामगृहा
णाऽमलवासनाः। ८०॥ अस्यसंसारवृक्षस्यसर्वापद्रवदायिनः। उपायएकएवास्तिमनसस्स्वस्यनिग्रहः॥ ८१॥ हस्तंहस्तेनसं
पीड्यदन्तैर्दन्तान्विचूर्ण्यच। अंगैरंगानिसमाक्रम्यजयेदादौस्वकंमनः॥८२॥ इच्छामात्रंविदुश्चित्तंतच्छांतिर्मोक्षउच्यते। एता
वन्त्येवशास्त्राणितपांसिनियमायमाः॥ ८३॥ यस्त्विच्छातानवेयत्नंनकरोतिनराधमः। सोंधकूपेस्वात्मानंदिनानुदिनमुज्झ
ति॥ ८४॥ दुःखमुत्पादयत्युच्चैरुत्थितश्चित्तराक्षसः। सुखायानंतभोगायतंप्रयत्नेनपातय॥ ८५॥ भोगाऽभोगतिरस्कारैः
कार्श्यंनेयंशनैर्मनः। रसाऽपहारैस्त्यक्तेनकालेनाऽजीर्णपर्णवत्॥ ८६॥ अनात्मन्यात्मभावेनदेहमात्रास्थयातथा। पुत्रदारकु
टुंबैश्चचेतोगच्छतिपीनताम्॥ ८७॥ स्नेहेनधनलोभेनलाभेनमणियोषिताम्। आपातरमणीयेनचेतोग०॥ ८८॥ अस्यचि

त्तमहाव्याधेश्चिकित्सयामहौषधम्। स्वायत्तंशृणुवक्ष्यामिसाधुस्वस्वादनिश्चितम् ॥ ८९ ॥ शमेनासाद्यतेश्रेयःशमोहिपरमंपदम्।
शमःशिवःशमःशान्तिःशमोभ्रान्तिनिवारणम् ॥ ९० ॥ पुंसःप्रशमतृप्तस्यशीतलाऽच्छतरात्मनः। शमभूषितचित्तस्यशत्रुरप्येतिमि
त्रताम् ॥ ९१ ॥ स्वपौरुषैकसाध्येनस्वेप्सितत्यागरूपिणा। मनःप्रशममात्रेणविनानास्तिशुभागतिः ॥ ९२ ॥ त्यजन्नऽभिमतंवस्तु
यस्तिष्ठतिनिरामयः। जितमेवमनस्तेनक्रुद्धन्तइवदन्तिना ॥ ९३ ॥ वाक्यसं०। एवंस्वेप्सितसंत्यागहेतुर्विचारईरितः। प्राक्त
नैर्भोगसंस्कारैर्विक्षिप्तचित्तस्यशान्तये ॥ ९४ ॥ ऐहिकैःस्वाऽवमानाद्यैश्चित्तंविक्रियतेयदि। तदेत्थंतच्छमायाऽस्मैविचारःक
र्त्तुमीरितः ॥ ९५ ॥ ज्ञानांकुशवा०। मन्निन्दयायदिजनःपरितोषमेतिनन्वऽप्रयत्नजनितोयमनुग्रहोमे। श्रेयोर्थिनोहिपुरु
षाःपरतुष्टिहेतोर्दुःखाऽर्जितान्यपिधनानिपरित्यजन्ति ॥ ९६ ॥ आत्मवा०। जीवन्तुमेशत्रुगणाःसदैवयेषांप्रसादात्सुविचक्षणो
ऽहम्। यदायदामेविकृतिंभजन्ते तदातदामांप्रतिबोधयन्ति ॥ ९७ ॥ आत्मानंयदिनिन्दन्तिस्वात्मानंस्वयमेवहि। शरीरंयदि
निन्दन्तिसहायास्तेजनाममम ॥ ९८ ॥ वाक्यसं०। विचाराख्योहिचित्तस्यशमोपायःप्रदर्शितः। योगिवाक्यैश्चयोगोपिह्यच्छमा

याधुनोच्यते ॥ ९९ ॥ हठप्रदीपिकाकृदात्मारामवा० । हेतुद्वयंतुचित्तस्यवासनाचसमीरणः । तयोर्विनष्टएकस्मिन्द्वावपिवि

नश्यतः ॥ ५०० ॥ पवनोवध्यतेयेनतेनैववध्यतेमनः । मनश्चवध्यतेयेनपवनस्तेनवध्यते ॥ १ ॥ वासिष्ठवा० । प्राणायामदृढाऽभ्यासै
र्युक्त्याचगुरुदत्तया । आसनाशनयोगेनप्राणस्पन्दोनिरुध्यते ॥ २ ॥ शिववा० । ज्ञानंकुतोमनसिजीवतिदेवियावत् । प्राणोऽपिजीव
तिमनोम्रियतेनतावत्प्राणोमनोद्वयमिदंविलयंप्रयाति । मोक्षंसगच्छतिनरोनकथंचिदन्यः ॥ ३ ॥ वाक्यसं० । ज्ञानाधिकारि
णोयस्मान्मध्यमस्यमनःशमः । योगाऽऽभ्यासंविनानास्तितस्माद्योगंससाधयेत् ॥ ४ ॥ योगेनप्राणसंस्पन्देक्षीणेसतिशनैःशनैः । मनः
प्रशमतामेतिपञ्चवृत्तिविरोधिनीम् ॥ ५ ॥ एवंमनःशमंकुर्याद्योगेनवाविचारतः । स्वश्रेयसेऽथवाह्यानांखानामप्युच्यतेदमः ॥ ६ ॥
मनःशमंविधायाथवहिरिन्द्रियसंयमम् । कुर्यान्नास्वहिताऽवासैनहरन्तितानिहृद्यतः ॥ ७ ॥ वाह्येन्द्रियदमेतस्मात्कार्योयत्नःपृथ
ग्बुधैः । तानिसर्वाणिसंयम्येत्युक्तंवांश्चयतोहरिः ॥ ८ ॥ शब्दादिविषयेभ्योयोवाह्येन्द्रियविनिग्रहः । सदमोभारतेप्रोक्तोदम
स्तुत्यादिकंतथा ॥ ९ ॥ भारतवा० । दमस्तेजोवर्द्धयतिपठितंचदमःपरम् । विपाप्मातेजसायुक्तःपुरुषोविन्दतेमहत् ॥ १० ॥

अदांतःपुरुषःक्लेशमभीक्ष्णंप्रतिपद्यते। अनर्थांश्चबहूनन्यान्प्रसरत्यात्मदोषजान् ॥११॥ इन्द्रियाण्येवमेध्यानिविजेतव्यानियत्न
तः। शब्दंनविन्देच्छ्रोत्रेणस्पर्शंत्वचानवेदयेत् ॥१२॥ रूपंनचक्षुषाविद्याज्जिह्वयानरसांस्तथा। घ्रेयाण्यपिचसर्वाणिजह्याद्ध्या
नेनयोगवित् ॥१३॥ अभयंसर्वभूतेभ्यःसर्वेषामभयंयतः। नमस्यःसर्वभूतानांदांतोभवतिबुद्धिमान् ॥१४॥ वाक्यसं०॥ दमंस
मभिधायाथोपरतिस्त्वधुनोच्यते। शान्तस्यचेतसोनित्यंशब्दादेःप्रागुदीरितात् ॥१५॥ दान्तानामिन्द्रियाणांचवाह्यानामपिस
र्वथा। यदुपरमणंप्रोक्ताऽऽचार्यैरुपरतिस्तुसा ॥१६॥ तथाऽखिलैषणान्यासःपरमोपरतिःस्मृता। सचाग्रेविस्तरेणाचषट्प्रकारे
णवक्ष्यते॥१७॥ विलापादीन्विनायातुसर्वद्वंद्वसहिष्णुता। विवेकिनैवसाप्रोक्तातितिक्षाब्रह्मवादिभिः ॥१८॥ तितिक्षार्थंविवे
कस्त्वेकादशेभिक्षुणेरितः। भागवतेतितिक्षायांविधिस्तुभारतेस्मृतः ॥१९॥ भागवतवा०। नायंजनोमेसुखदुःखहेतुर्नदेवतात्मा
ग्रहकालकर्म। मनःपरंकारणमामनन्तिसंसारचक्रंपरिवर्त्तयेद्यत् ॥२०॥ भारतवा०। धर्मंपुत्रनिषेवस्वसुतीक्ष्णौचहिमाऽऽ
तपौ। क्षुत्पिपासेचवायुंचजयनित्यंजितेन्द्रिय ॥२१॥ अतिवादांस्तितिक्षेतनाऽवमन्येतकञ्चन। क्रोश्यमानःप्रियंब्रूयादाक्रु

ष्टःकुशलंवदेत् ॥ २२ ॥ अवकीर्णःसुगुप्तश्चनवाचाह्यप्रियंवदेत् । मृदुःस्यादप्रतिक्रूरोविस्रब्धःस्यादकत्थनः ॥ २३ ॥ वाक्य
सं० । एवंसुधीर्विवेकेनसर्वद्वंद्वसहिष्णुताम् । संपाद्यगुरुवाक्यादौकुर्याच्छ्रद्धांप्रयत्नतः ॥ २४ ॥ ब्रह्मात्मैक्यपरेशास्त्रेगुरुवाक्येत
थाऽनिशम् । इत्थमेवेतिविश्वासोयःसाश्रद्धेतिभण्यते ॥ २५ ॥ श्रद्धालुर्नैवसंभाव्यंवेदान्तश्रवणार्थिना । श्रद्धत्स्वेत्यादिवाक्यानि
श्रद्धांज्ञानायसंजगुः ॥ २६ ॥ ब्रह्मण्याचार्यवाक्येचैकाग्र्यंयत्तुचेतसः । समाधानंहितत्प्रोक्तंकर्त्तव्यंश्रवणेच्छुभिः ॥ २७ ॥ शांतइ
त्यादिवाक्यंह्याश्रित्यषट्संपदीरिता । मोक्षेच्छाऽधिकृतस्याद्यविशेषणतयोच्यते ॥ २८ ॥ शृङ्खलाभिर्हिवद्धस्ययष्टिभिस्ताडित
स्यचराजभृत्यैर्यथोदेतिमोचनेच्छाभृशंहिनुः ॥ २९ ॥ तथासंसृतिपाशेनवद्धस्याऽज्ञानतोभृशम् । प्रतीचोमोचनेच्छायामुमुक्षासो
च्यतेवुधैः ॥ ३० ॥ ननुकोह्यात्मनोवंधःकश्चमोक्षःप्रकीर्त्तितः । मोक्षस्यसाधनंकिंचमानंतेषुतथैवकिम् ॥ ३१ ॥ शृणुवनात्मन्यहं
भावोयःसवंधःप्रकथ्यते । मूलाऽविद्याविनाशोयःसमोक्षइतिकथ्यते ॥ ३२ ॥ निरतिशयकस्याचप्रादुर्भावोहियोहृदि । निःशे
षानर्थनाशश्चसमोक्षःसद्भिरुच्यते ॥ ३३ ॥ मोक्षस्यसाधनंसाक्षाज्ज्ञानंतथाऽभयादयः । पारंपर्य्येणगीतासुकथितामोक्षहेतवः

॥ ३४ ॥ गीतावा० । अभयंसत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानंदमश्चयज्ञश्चस्वाध्यायस्तपआर्ज्जवम् ॥ ३५ ॥ अहिंसासत्य
मक्रोधस्त्यागःशान्तिरपैशुनं दयाभूतेष्वऽलोलुत्वंमार्द्दवंह्रीरचापलम् । तेजःक्षमाधृतिःशौचमद्रोहोनातिमानिता ॥ ३६ ॥
वाक्यसं० । वन्धाद्यर्थेषुमानंतुश्रुतिःस्मृतिस्तथास्तिच । संगृह्याभ्यद्यतेमत्तःसावधानमनाःशृणु ॥ ३७ ॥ श्रुतिः । वन्धोहिवास
नावन्धोमोक्षःस्याद्वासनाक्षयः । भोगेच्छामात्रकोवन्धस्तत्त्यागोमोक्षउच्यते ॥ ३८ ॥ शिवगीतासु । मोक्षस्यनहिवासोस्तिन
ग्रामान्तरमेववा । अज्ञानहृदयग्रन्थिनाशोमोक्षइतिस्मृतः ॥ ३९ ॥ वाक्यसंग्रहकृद्दा० । यस्मान्मोक्षसुखादन्यत्सुखंक्कापिनवि
द्यते । तस्मान्मुमुक्षुणाभाव्यंनैवभोगेच्छुनाक्कचित् ॥ ४० ॥ मुमुक्षुःसंश्रवोधाययतेतब्रह्मणःसुधीः । अन्यथाजन्ममृत्यूनुर्निवर्त्तेतां
नकर्हिचित् ॥ ४१ ॥ तस्माज्ज्ञानात्मकस्येहनित्यमोक्षसुखस्यया । इच्छाऽधिकारिणःसापिविशेषणंहिसंभवेत् ॥ ४२ ॥ ननुभावस्वरू
पस्ययेच्छानित्यसुखस्यवै । सातुरागात्मकत्वेनप्रवृत्तिंजनयेद्ध्रुवम् ॥ ४३ ॥ रागात्प्रवर्त्तमानस्यसंसारःप्रत्यताऽऽपतेत् । तस्मात्ता
दृक्सुखेच्छास्यान्नाधिकारिविशेषणम् ॥ ४४ ॥ नभावश्चसुखंतस्मात्किंतुदुःखात्ययोहितत् । लोकेरोगादिदुःखस्याऽभावेहिसुखतो

च्यते ॥ ४५ ॥ स्वस्वरूपंसुखंतच्चेन्नाऽवेद्यंनृभिरर्थ्यते । वेद्यत्वेकर्मकर्तृत्वदोषोह्येकस्यचाऽऽपतेत् । तस्माद्दुःखस्यध्वंसःस्यान्मोक्षो
नभावरूपकः ॥ ४६ ॥ मैवंसुखंचदुःखंचभावरूपंगजाश्ववत् । यतोनुभूयतेलोकेसुखस्याऽभावताकुतः ॥ ४७ ॥ तदेतत्प्रेयइत्या
दिश्रुतिभिर्भावतोदिता । तथात्मनस्तुकामायेत्युक्तासुखस्यभावता ॥ ४८ ॥ तदेवंसुखयोःसिद्धालौकिकवैदिकाख्ययोः । भाव
तालोकवेदाभ्यामैक्यार्थ्याल्लोकवेदयोः ॥ ४९ ॥ यदुक्तंभावरूपत्वेमोक्षेरागात्प्रवृत्तितः । मोक्षःसंसारएवस्यात्त्वत्पक्षेप्यस्तितत्स
मम् ॥ ५० ॥ संसृतिदुःखविद्वेषाद्दुःखध्वंसाख्यमोक्षके । प्रवृत्तेःसंसृतित्वंतेमोक्षस्यनकुतोभवेत् ॥ ५१ ॥ पुरुषार्थाऽभियोगित्वा
द्वेषस्ययदिसंसृतेः । उद्वेगतातदामोक्षेरागोप्यास्तिक्यमत्र्चवै ॥ ५२ ॥ यत्तूक्तमपुमर्थत्वमवेद्यत्वेहिकर्मता । कर्तृतैकस्यवेद्यत्वे
नेहदोषद्वयंहितत् ॥ ५३ ॥ सुखस्यस्वस्वरूपत्वाद्वेद्यतातन्ननेष्यते । जडएवेष्यतेसाहिनतुज्ञानसुखात्मके ॥ ५४ ॥ दृश्यतेत्विति
तुश्रुत्यावृत्तिव्याप्यत्वमात्मनः । उच्यतेनैववेद्यत्वंयतइत्यादिवाक्यतः ॥ ५५ ॥ तदेवंलोकवेदाभ्यांसुखस्यभावतेरिता । ताभ्यांतु
ष्टिर्नचेत्तर्हियुक्तिमपीहमेशृणु ॥ ५६ ॥ सुखंदुःखस्यनैवाऽस्त्यऽभावस्तदनिरूपणात् । यथाघटस्तथाचेदंतस्माद्भितत्तथाभवेत्

॥ १२ ॥ त्र्येकदण्डकषायाणिन्याससलिङ्गानियानिवै। तेष्वधिकृतिमाहुःस्मविप्रस्यश्रुतयःस्फुटम् ॥ १३ ॥ निर्वेदंब्राह्मणोह्याया
त्प्रव्रजेद्ब्राह्मणोगृहात्। व्युत्थायब्राह्मणाभिक्षाचर्यमित्यादिकाःकिल ॥ १४ ॥ क्षत्रियादित्रयाणांतुनास्तिलिङ्गाधिकारिता।
स्मृतयश्चतथाप्राहुर्लिङ्गेविप्राधिकारिताम् ॥ १५ ॥ अत्रिस्मृ०। कषायंब्राह्मणस्योक्तंनाऽन्यवर्णस्यकस्यचित्। मोक्षाश्रमेसदा
प्रोक्तंधातुरक्तंतुयोगिनाम् ॥ १६ ॥ विष्णुस्मृ०। मुखजानामयंधर्मोवैष्णवंलिङ्गधारणम्। बाहुजातोरुजातानांनायंधर्मोविधी
यते ॥ १७ ॥ याज्ञवल्क्यस्मृ०। चत्वारोब्राह्मणस्योक्ताःस्वाश्रमाःश्रुतिचोदिताः। क्षत्रियस्यत्रयःप्रोक्ताद्वावेकोवैश्यशूद्रयोः
॥ १८ ॥ वाक्यसंग्रहकृद्दा०। एवंलिङ्गाऽधिकार्युक्तोऽलिङ्गस्याप्यधुनोच्यते। क्षत्रियवैश्यशूद्राद्यास्त्यागमात्राऽधिकारिणः ॥ १९ ॥
तेषांपुण्यविपाकेनविविदिषोद्भवेद्यदि। जन्मापादककर्मादेस्त्यागःकार्योपितैस्तदा ॥ २० ॥ त्यागमात्रात्मकोन्यासःशूद्रस्यापि
समीरितः। प्रव्राज्योपनिषच्छ्रुत्याक्षत्रियादेस्तदाकिमु ॥ २१ ॥ श्रुतिः। वैराग्यमासाद्यतुपापयोनिःशूद्रोपिसंन्यासमुपेत्यमोक्षं।
प्राप्नोतिपापंतुविधूयविप्रःसंन्यासमेत्याननुमुच्यतेवै ॥ २२ ॥ वाक्यसं०। चतुर्णामपिवर्णानांशांत्यादिगुणधारिणाम्। त्यागमात्रा

त्मकंन्यासंस्फुटमाहस्मृतिस्तथा ॥ २३ ॥ स्मृतिः। भैक्षचर्यंततःप्राहुस्ततस्तद्धर्मचारिणः। तथावैश्यस्यराजेन्द्रराजपुत्रस्यचैव
हि ॥ २४ ॥ वाक्यसं०। त्यागमात्रात्मकेन्यासेशूद्रस्त्र्योरधिकारिता। भाष्यकृतोप्यभिप्रेतेतिवार्त्तिककृदुक्तवान् ॥ २५ ॥ वा
र्त्तिककृद्वा०। विद्याङ्गतत्त्वज्ञात्मानंगार्गीविदुरयोरपि। स्त्रीशूद्रयोर्भाष्यकारःसंन्यासमनुमन्यते ॥ २६ ॥ वाक्यसं०। ननुलि
ङ्गंविनान्यासोनन्यासइतिचेदसत्। तेनविनापियस्माद्वैन्यासोभाष्यकृतेरितः ॥ २७ ॥ भाष्यकृद्वा०। हठाऽभ्यासोहिसंन्यासो
नैवकाषायवाससा। नाहंदेहोहमात्मेतिनिश्चयोन्यासलक्षणम् ॥ २८ ॥ वाक्यसं०। एषणात्रयसंन्यासस्तुल्योहिलिंग्यऽलिङ्गि
नोः। सएवमोक्षहेतुश्चत्यागेनैकइतिश्रुतेः ॥ २९ ॥ स्वदेहस्योपभोगायलोकोपकृतयेतथा। दण्डादीन्ब्राह्मणस्यैवमुक्तवतोस्तु
तिःस्वयम् ॥ ३० ॥ मनुः। अलिङ्गीलिङ्गिवेषेणयोवृत्तिमुपजीवति। सलिङ्गिनांहरत्येनस्तिर्यग्योनौचजायते ॥ ३१ ॥ वाक्य
सं०। लिङ्गधृताऽवयोग्यानांवृत्तिंलिङ्गेनकुर्वताम्। इत्यब्रवीन्मनुर्दोषंकाषायादिप्रधारणे ॥ ३२ ॥ तस्माद्विप्रेतरैर्वर्णैर्धार्यंलिं
गनवृत्तये। स्वमोक्षार्थंतुसंत्यागस्तैःकार्योविदुरादिवत् ॥ ३३ ॥ जातिनिबन्धनोन्यासेऽधिकारएवमीरितः। गुणनिबन्धनोप्य

॥ ५७ ॥ विवादास्पदआनन्दोभावोभवितुमर्हति। प्रतियोग्यऽनिरूप्यत्वाद्यथाघटस्तथाह्ययम् ॥ ५८ ॥ एवंदुःखात्ययोमोक्षइ
त्यक्षपादसंमतं। लोकाऽगमानुमानैःप्राग्दिङ्मात्रेणेहदूषितम् ॥५९॥ इत्थंभट्टाद्य भिप्रेतमोक्षेषुदूषणंसुधीः। ज्ञात्वातान्परि
त्यज्यवांछेत्स्वात्मसुखंशिवम् ॥ ६० ॥ तस्माद्भावात्मकस्येच्छानित्यमोक्षसुखस्ययाः। साप्येवंसंभवेद्देवाऽधिकारिविशेषणम् ॥ ६१ ॥
अतोमोक्षायसंपाद्यादैवीसंपन्मुमुक्षुणा। पारंपर्येणहेतुत्वंमुक्तेस्तस्याःपुरोदितम् ॥ ६२ ॥ येमहाव्रतवन्तोवैदैवीसंपत्समन्वि
ताः। आसुर्यासंपदाहीनास्तेनरामोक्षभागिनः ॥ ६३ ॥ नित्यभावसुखादन्यत्सुखंदुःखाऽन्वितंयतः। तस्माद्भोगसुखंत्यक्त्वामो
क्षेच्छामाश्रयेद्बुधः ॥ ६४ ॥ एवंरामप्रसादेनप्रकरणंतृतीयकम्। समाप्तंसाधनानांवैचतुर्णांसुनिरूपकम् ॥ ६५ ॥ ७९७ ॥
इतिश्रीमुमुक्षुसर्वस्वसारसंग्रहाख्येनिबंधेसाधनचतुष्टयनिरूपणाख्यंतृतीयंप्रकरणंसंपूर्णम् ॥ ३ ॥ ० ॥

श्रीगणाधिपतयेनमोनमः । चतुर्भिःसाधनैर्युक्तायस्यज्ञातुमिहेच्छया । कुर्वन्तिद्विविधंन्यासन्तंवन्देरघुनन्दनम् ॥ १ ॥ अथ संन्यासिनांधर्मान्न्यासाधिकारिणस्तथा । वदन्तियानिवाक्यानिसंगृह्णाम्येचतान्यहम् ॥ २ ॥ चतुःसाधनसंपन्नःस्वगृहान्नापरिव्रजेत् । प्रत्यग्ज्ञानायजिज्ञासुर्विद्वांश्चित्तशांतये ॥ ३ ॥ त्यागएवहिसर्वेषांमोक्षसाधनमुत्तमम् । इतिश्रुतिर्यतःप्राहन्यासंज्ञानायकर्मणाम् ॥ ४ ॥ त्यजधर्ममधर्मंचेत्याहन्यासन्तथाश्रुतिः । न्यासोब्रह्मेतिचाप्याहतैत्तरीयश्रुतिस्तथा ॥ ५ ॥ ससंन्यासोद्विधाज्ञेयोलिङ्गाऽलिङ्गविभागतः । तयोश्चलिङ्गसंन्यासोज्ञेयःषोढापुनर्बुधैः ॥ ६ ॥ कुटीचकोवहूदश्चहंसःपरमहंसकः । तुर्य्यातीतोवधूतश्चषडेतेभिक्षवःस्फुटम् ॥ ७ ॥ पारिव्राजाभिधेयायामुपनिषद्युदीरिताः । तेषांधर्मास्तथातत्राऽन्यास्वपिचप्रकीर्त्तिताः ॥ ८ ॥ षट्सुपरमहंसोयश्चतुर्थःसमुदीरितः । जिज्ञासुर्ज्ञानवांश्चेतिविज्ञेयोद्विविधोहिसः ॥ ९ ॥ प्रत्यग्बोधायजिज्ञासोर्न्यासश्चारण्यकेश्रुतः । एतंलोकमिच्छन्तोवैन्यासिनःप्रव्रजन्तिहि ॥ १० ॥ जीवन्मुक्तेस्तुसंसिद्ध्यैविद्वत्सन्न्यासईरितः । एतद्ब्रह्मेतिवाक्येनवाजसनेयिभिःस्फुटम् ॥ ११ ॥ किंप्रजयाकरिष्यामोऽतिदुःखहेतुभूतया । अयमात्मापरानन्दःसदाऽस्माभिर्हिवीच्यते

र्याधिकारोऽत्र्यनिरूप्यते ॥ ३४ ॥ निष्कामत्वमकोपत्वंक्षमासत्यंशमादयः । यस्मिन्नित्यंहिवर्त्तंतेससंन्यासेऽधिकारवान् ॥ ३५ ॥
लिङ्गसहकृतेन्यासेलिङ्गेनरहितेतथा । विविदिषाह्वयेतस्मिन्विद्वन्न्यासेतथैवच ॥ ३६ ॥ ऋतेकामादिसंत्यागान्नाऽधिकारोऽ
स्तिकस्यचित् । कामादीन्हितत्स्त्यक्त्वासंन्यस्येत्कुशलोनरः ॥ ३७ ॥ इत्युक्तंवेदसारज्ञैर्बृहस्पत्यादिभिःस्फुटम् । तत्स्मृतीश्चलि
खाम्यत्रन्यासाऽधिकारिबोधिकाः ॥ ३८ ॥ बृहस्पतिस्मृ० । यस्मिन्कामाःप्रविशंतिविषयेभ्योऽपसंहृताः । विषयान्नपुनर्याति
सकैवल्याश्रमेवसेत् ॥ ३९ ॥ यस्मिन्क्रोधःशमंयातिविफलःसम्यगुत्थितः । आकाशेऽसिर्यथाच्छिन्नःस० ॥ ४० ॥ अतीतान्नस्म
रेद्भोगान्नतथानागतानपि । प्राप्तांश्चनाभिनन्देद्यःस० ॥ ४१ ॥ अद्धाध्यानंतपःशौचंयस्यवित्तंचतुष्टयम् । रमणंचाद्वितीयस्यस०
॥ ४२ ॥ अन्तःस्थानीन्द्रियाण्यंतर्वहिष्ठान्विषयान्वहिः ॥ शक्नोतियःसदाकर्त्तुंस० ॥ ४३ ॥ भारतवा० । यस्मिन्वाचःप्रविशं
तिकूपेन्यस्ताद्विपाइव ॥ नवक्तारंपुनर्यान्तिसकै० ॥ ४४ ॥ यस्मिन्क्षांतिःशमःशौचंसत्यंसंतोषआर्ज्जवं । अकिंचनमदंभंचस०
॥ ४५ ॥ वशिष्ठस्मृ० । प्राणेगतेयथादेहःसुखंदुःखंनविन्दति ॥ तथाचेत्प्राणयुक्तोपिसकै० ॥ ४६ ॥ व्यासस्मृ० । ब्रह्मचारीगृ

हस्थोवावानप्रस्थोऽथवापुनः। विरक्तःसर्वकामेभ्यःपारिव्राज्यंसमाश्रयेत् ॥ ४७ ॥ वाक्यसंग्रहकृद्वा ०। विरागस्यविभागेनसंन्याससस्यापिभिन्नता ॥ जीवन्मुक्तिविवेकेवैविद्यारण्यैःप्रदर्शिता ॥ ४८ ॥ जीवन्मुक्तिविवेकवा ०। संन्यासहेतुर्वैराग्यंयदहर्विरजेत्तदा ॥ प्रव्रजेदितिवेदोक्तेस्तद्भेदस्तुपुराणतः ॥ ४९ ॥ विरक्तिर्द्विविधाप्रोक्तातीव्रातीव्रतरेतिच। सत्यामेवतुतीव्रायांन्यसेद्योगीकुटीचके ॥ ५० ॥ शक्तोवहूदकेतीव्रतरायांहंससंज्ञिते ॥ मुमुक्षुःपरमहंसेसाक्षाद्विज्ञानसाधने ॥ ५१ ॥ अस्मिन्जन्मनिमाभूवन्पुत्रदारादयोमम ॥ इतियासुस्थिराबुद्धिःसावैराग्यस्यतीव्रता ॥ ५२ ॥ पुनरावृत्तिसहितोलोकोमेमास्तुकश्चन ॥ इतितीव्रतरत्वंस्यान्मन्देन्यासोनकोपिहि ॥ ५३ ॥ पुत्रदारधनादीनांनाशेतात्कालिकीमतिः ॥ धिक्संसारमितीदृक्स्याद्विरक्तेर्मन्दताहिसा ॥ ५४ ॥ यात्राद्यशक्तिशक्तिभ्यांतीव्रेन्यासद्वयंभवेत्। कुटीचकोवहूदश्चेत्युभावेतौत्रिदण्डिनौ ॥ ५५ ॥ द्वयंतीव्रतरेब्रह्मलोकमोक्षविभेदतः ॥ तल्लोकेतत्त्वविद्धंसोलोकेस्मिन्परहंसकः ॥ ५६ ॥ वाक्यसं ०। पारिव्राज्याभिधेयायामुपनिषद्युदीरिता। नियमायहिभिक्षूणांदर्श्यायामद्यतानिह ॥ ५७ ॥ कुटीचकस्त्रिवारंवैस्नानंकुर्वीतयत्नतः ॥ वहूदकोद्विवारंचैकवारंतत्तुहंस

कः ॥ ५८ ॥ स्नानंपरमहंसस्यमानसमुदितंतथा ॥ तुर्य्यातीतस्यतद्भस्मवधूतस्यवायुना ॥ ५९ ॥ कुटीचकयतेःक्षौरमृतौ
बहूदकस्यतत् ॥ ऋतुद्वयेचहंसस्यक्षौरंनचविधीयते ॥ ६० ॥ नापितत्परहंसस्याऽस्तिचेत्तदयनेद्वयोः ॥ तुर्य्यातीतस्यनक्षौरम
वधूतस्यतन्नच ॥ ६१ ॥ कुटीचकस्यचैकान्नंमाधुकरीबहूदकः । हंसपरमहंसौतुभीकरपात्रकौस्मृतौ ॥ ६२ ॥ तुर्य्याऽतीतस्य
भिक्षायैगोवन्मुखंविदारयेत् ॥ अवधूतस्यवृत्तिस्तुवेदेनाजगरीस्मृता ॥ ६३ ॥ कुटीचकस्यसाटीद्वेबहूदस्यैकसाटिका ॥ तस्याऽर्द्धं
तुहंसस्यपरहंसोदिगम्बरः ॥ ६४ ॥ यद्वापरमहंसस्यकौपीनैकस्यसंग्रहः । जातरूपधरत्वंतुतुर्य्यातीतावधूतयोः ॥ ६५ ॥
कुटीचकादितुर्य्याणांनान्योपदेशयोग्यता । तुर्य्यातीतोऽवधूतश्चकुर्य्यादन्योपदेशनम् ॥ ६६ ॥ कुटीचकोबहूदश्चवेदान्तानां
पुनःपुनः । कुर्य्याच्छ्रवणंनित्यंब्रह्मज्ञानाभिवाञ्छया ॥ ६७ ॥ हंसःपरमहंसश्चकुर्वीतमननंमुहुः । तुर्य्यातीतोवधूतश्चनिदि
ध्यासनमाचरेत् ॥ ६८ ॥ कुटीचकादिभिःषड्भिःकार्य्यमात्मानुचिन्तनम् । श्रेष्ठस्त्वेषांहिविज्ञेयःसदोत्तरोत्तरोयतिः ॥ ६९ ॥
उपनिषत्त्वथान्यासुयतिधर्माययेरिताः । संक्षेपात्तानपीहाहंगृह्णामितेषुवृत्तये ॥ ७० ॥ कामादीनांनिरासायसदाकृशोभवे

यतिः ॥ वस्त्रंचधारयेज्जीर्णंसमर्थोननवंग्रहेत् ॥ ७१ ॥ एकरात्रंवसेद्ग्रामेनगरेपञ्चरात्रकम्। वर्षाभ्योन्यत्रनासीतैकत्रचेत्युक्तं
कठश्रुतौ ॥ ७२ ॥ आसनशयनेभूमौखट्वायांनकदाचन। कुर्याद्यतिरितिप्रोक्तमारुण्युपनिषद्यपि ॥ ७३ ॥ भिक्षुश्चेद्योहिरा
गेणहेमपश्यतिमूढधीः। सब्रह्महाभवेत्तद्वत्तत्स्पृष्टापौल्कसोभवेत् ॥ ७४ ॥ हिरण्यसंग्रहीभिक्षुर्भवेद्देवात्महातथा। आत्म
हाचातिपापीतिप्रसिद्धंलोकवेदयोः ॥ ७५ ॥ तस्मादेतत्त्रयंत्याज्यंस्वस्यमोक्षायभिक्षुणा। इतिपरमहंसाख्योपनिषदपिसंज
गौ ॥ ७६ ॥ अखिलसंहिताख्यायामुपनिषद्युदीरिताः। धर्मायेचापिभिक्षूणांदर्शयाम्यद्यतानिह ॥ ७७ ॥ देवर्षिर्नारदो
भ्येत्यब्रह्माणंपरिपृष्टवान्। भगवन्ब्रूहिभिक्षूणांनियमान्कृपयैवमे ॥ ७८ ॥ एवंपृष्टःप्रजाधीशःप्राहत्वंशृणुनारद। भिक्षुर्नस्वा
टनेकुर्यात्स्वनिरोधादिकंक्वचित् ॥ ७९ ॥ ननद्युत्तरणंकुर्याद्धस्ताभ्यांचक्वचिद्यतिः। नाग्निसेवांप्रकुर्वीतनैकत्राशनमाचरे
त् ॥ ८० ॥ भिक्षयाहृतमन्नंचसमश्नीयाद्यतिःसदा। मेदोवृद्धिंनकुर्वीतकुर्याच्चप्राणरक्षणम् ॥ ८१ ॥ त्यजेद्रुधिरवच्चाज्यमे
कस्यान्नंचमांसवत्। चन्दनादिप्रलेपंतुविष्ठालेपमिवत्यजेत् ॥ ८२ ॥ केवलंलवणंभिक्षुरन्त्यजवत्परित्यजेत्। स्त्रीसंगमिवचा

ऽभ्यङ्गंवस्त्रंचोच्छिष्टपात्रवत् ॥ ८३ ॥ मूत्रवच्चपरित्याज्यंभिक्षुणोष्णोदकंसदा। मलवच्चतनोःस्पर्शंवर्जयेदात्मवान्यतिः ॥ ८४ ॥
देशोज्ञातचरस्त्याज्यश्चाण्डालगृहवीथिवत्। नारीचाहिरिवत्याज्याभिक्षुणास्वहितार्थिना ॥ ८५ ॥ सुवर्णंविषवत्त्याज्यंसभास्थ
लंश्मशानवत् ॥ कुंभीपाकमिवत्याज्याराजधानीचभिक्षुणा ॥ ८६ ॥ भिक्षान्नांहरिण्डिकादिस्थमन्नंयथाद्विजादिभिः। संत्यज्य
तेतथाभिक्षुर्मिष्टान्नंचसदात्यजेत् ॥ ८७ ॥ दर्शनंस्वान्यदेवस्यत्यक्त्वाथलोकरञ्जनं। विहायैवस्वदेशंचकुर्यात्स्वरूपचिन्तनम् ॥
८८ ॥ चिन्तयन्स्वस्वरूपंचत्यक्त्वाबन्धुभवस्थलम्। कारागृहविनिर्मुक्तचोरवद्दूरतोवसेत् ॥ ८९ ॥ पट्टणेचौर्योराचार्योच्चेवेष
ड्डाचकंवसेत्। तीर्थैचसमराचार्यैवंचरेदनिकेतकः ॥ ९० ॥ मात्सर्यादींश्चसंदग्ध्वासदैकाकीयतिश्चरेत्। पट्टणनगरग्रामा
न्नकुर्वीतकदाचन ॥ ९१ ॥ द्वाभ्यांग्रामःसमाख्यातस्त्रिभिश्चपट्टणंभवेत्। चतुर्भिर्नगरंतस्मात्चयंत्यक्त्वाचरेद्यतिः ॥ ९२ ॥
ननुन्यासस्यधर्माणांस्यादुदाहरणेनकिम्। सतिकर्माधिकारेनुयतोनन्याससंभवः ॥ ९३ ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतं
समाः। जाग्रत्स्वित्यादिवाक्येषुन्यासःस्याज्जीवतःकथम् ॥ ९४ ॥ मैवंश्रुत्यादिवाक्यैर्हिव्याससूचेणवैतथा। संन्यासाश्रमसङ्गा

मु० सा० वोपिलभ्यतेयतःस्फुटम् ॥ ९५ ॥ उदाहराम्यहंचेहश्रुत्यादिवचनानिवै । न्यासाऽसंभवशङ्कायाविच्छित्यैतानिसंशृणु ॥ ९६ ॥
ब्रह्मोपनिषच्छ्रुतिः । सशिखंवपनंकृत्वाबहिःसूत्रंत्यजेद्बुधः । यदक्षरंपरंब्रह्मतत्सूत्रमितिधारयेत् ॥ ९७ ॥ वाक्यसं० । द्वावेवे
तिश्रुतिर्न्यासंप्रव्रजेदितिचाहृतम् । इत्याद्याःश्रुतयःसंतिस्मृतीश्चापिशृणुष्वभो ॥ ९८ ॥ अंगिरसस्मृ० । संन्यसेद्ब्रह्मचर्यंवासं
न्यसेद्वागृहादपि । वनाद्वासंन्यसेद्विद्वानातुरोऽथवादुःखितः ॥ ९९ ॥ यमस्मृतौ । संन्यस्तंमेजगन्नाथपाहिमांमधुसूदन । मा
हिमांसर्वदेवेशवासुदेवसनातन ॥ १०० ॥ अहंसर्वाभयंदत्वाभूतानांपरमेश्वर । युष्मच्छरणमापन्नस्त्राहिमांपुरुषोत्तम ॥ १ ॥
लिङ्गपुराणवा० । निःकृत्यसशिखान्केशानुपवीतंविसृज्यच । पञ्चभिर्जुहुयादप्सुभूःस्वाहेतिचवाक्क्रमात् ॥ २ ॥ वाक्यसं० ।
ऊर्द्ध्वरेतस्सुशब्देहीतिसूत्रेणचसूत्रकृत् । संन्यासस्यापिसद्भावंभगवान्स्फुटमूचिवान् ॥ ३ ॥ कुर्वन्नेवेतिमन्त्रस्ययावज्जीवमि
तिश्रुतेः । तर्हित्वयागतिर्वाच्येतिचेच्छृणुवदामिताम् ॥ ४ ॥ कुर्वन्नित्यादिवाक्यान्यऽविरक्तविषयाणिभो । वर्णाश्चापियवेष्ट्यौ
वातेषांचविषयौतयोः ॥ ५ ॥ लिंगेऽनधिकृतत्वाद्वैकषायमितिचस्मृतेः । बृहदारण्यभाष्येपिभाष्यकृतातथेरणात् ॥ ६ ॥

जायमानश्रुतिरेवमृणानीतिस्मृतिस्तथा। गृहस्थत्वेनयोजातस्तद्विषयेंतुतेशुभे ॥ ७ ॥ स्वाध्यायश्राद्धदानाद्यैर्दैवर्णाऽपाकरणं
स्मृतम्। तानिकर्त्तुंनशक्नोतिजातमात्रोहिकश्चन ॥ ८ ॥ एवंसंन्याससद्भावःसम्यगत्रनिरूपितः। तद्धर्मकथनाऽऽक्षेपोवृथाऽ
तःपूर्वपक्षिणः ॥ ९ ॥ श्रुत्यर्थसंग्रहेणाग्र्यतिधर्माःप्रदर्शिताः। श्रुतिस्मृतिग्रहेणेहवक्ष्यंतेतेपुनस्तथा ॥ १० ॥ विविदिषोर्यते
धर्मायैर्वाक्यैःप्रतिपादिताः। प्रायेणतानिवाक्यानिग्रहीष्यामीहविस्तरात् ॥ ११ ॥ धर्मबोधंविनानास्तियतेःस्वधर्मसेवनम्। तेन
विनानमोक्षःस्यात्तस्मात्सेव्यायमादयः ॥ १२ ॥ यमादयोयतेर्धर्माःश्रुत्यादिभिःसमीरिताः। यमानिवृत्तिरूपाःस्युःप्रवृत्त्यानियमा
युताः ॥ १३ ॥ यमादशविधाःप्रोक्तानियमाश्चदशस्मृताः। याज्ञवल्क्यस्मृतौतावत्तानत्रानुवदाम्यहम् ॥ १४ ॥ याज्ञवल्क्यस्मृ०।
अहिंसासत्यमस्तेयंब्रह्मचर्यंदयाऽऽर्जवम्। क्षमाधृतिर्मिताहारःशौचंत्वेतेयमादश ॥ १५ ॥ तपःसंतोषमास्तिक्यंदानमीश्वरपूज
नम्। सिद्धांतश्रवणंचैवह्रीर्मतिश्चजपोहुतम्। एतेचनियमाःप्रोक्तायाज्ञवल्क्येनयोगिना ॥ १६ ॥ सनत्सुजातीयोपनिषच्छ्रुतिः।
सर्वभूतसुहृच्छांतःसर्वभूताऽभयप्रदः। भयस्थानानिसंचित्यवर्जयीतविचक्षणः ॥ १७ ॥ कठश्रुत्युपनिषच्छ्रुतिः०। नदीपुलिनशा

सा० यीस्याद्देवागारेषुवास्वपेत्। नात्यर्थंसुखदुःखाभ्यांशरीरमुपतापयेत्॥१८॥ अचिस्म्०। अहिंसासत्यमस्तेयंब्रह्मचर्याऽपरिग्रहौ।
भावशुद्धिर्हरौभक्तिःसंतोषःशौचमार्जवम्॥१९॥ आहारशुद्धिर्वैराग्यंसंप्रसादोदयानृणाम्। अस्नेहोगुरुशुश्रूषाश्रद्धाक्षांति
र्दमःशमः॥२०॥ ह्रीस्तपोज्ञानविज्ञानंयोगोलक्ष्याशनंधृतिः। अदीनत्वमनुद्वेगोब्रह्मधीःसमदर्शनम्॥२१॥ एषस्वधर्मोव्या
ख्यातोयतीनांमुक्तिमिच्छताम्। अभ्युत्थानंप्रियालापंगुरुवत्प्रतिपूजनम्॥२२॥ यतीनांवृत्तवृद्धानांस्वीयधर्मेषुवर्त्तिनाम्।
कर्त्तव्यमन्यथायोगीस्वधर्मात्प्रच्युतोभवेत्॥२३॥ छेदभेदोपमर्दंचप्राकारंगृहमाश्रमम्। स्वाहास्वधावषट्कारोविषयाणांच
संनिधिः॥२४॥ स्तुतिर्निंदाक्रियावादाःपरमर्मावघाटनम्। तृष्णाक्रोधोऽनृतंमायालोभमोहौप्रियाप्रियौ॥२५॥ शिल्पंव्याख्या
नियोगश्चकामोरागःपरिग्रहः। अहंकारोममत्वंचचिकित्साधर्मसाहसम्॥२६॥ प्रायश्चित्तंप्रदानंचमंत्रौषधमथाऽऽशिषः।
एकान्नंमदमात्सर्यंगंधपुष्पविभूषणम्॥२७॥ तांबूलाभ्यंजनेक्रीडाभोगकांक्षारसायनम्। कत्थनंकुत्सनंस्वस्तिज्योतिषंक्रय
विक्रयम्॥२८॥ क्रियाकर्मविवादांश्चगुरुवाक्यादिलंघनम्। संधिश्चविग्रहोयानंमंचकःशुक्लवाससी॥२९॥ शुक्रोत्सर्गो

दिवास्वापोभिक्षाधारस्तुतैजसः। विषंचैवायुधंवीजंहिंसातैलादिमैथुनम् ॥ ३० ॥ प्रतिषिद्धानिचैतानिसेवमानोव्रजत्यधः
भैक्ष्यदेशनृपक्ष्मातिपुत्रमित्रादियोषिताम् ॥ ३१ ॥ उपचारकथास्त्वन्यामनसापिनचिंतयेत्। आगच्छागच्छतिष्ठेतिस्वागतंसुहृ
दोपिवा। संमानंचनप्रब्रूयान्मुनिर्मोक्षपरायणः ॥ ३२ ॥ मेधातिथिस्मृ०। आसनंपात्रलोपश्चसंचयःशिष्यसंग्रहः। दिवा
स्वापोवृथालापोयतेर्बंधकराणिषट् ॥ ३३ ॥ एकाहात्परतोग्रामेपंचाहात्परतःपुरे। वर्षाभ्योन्यत्रयत्स्थानमासनंतदुदाहृ
तम् ॥ ३४ ॥ उक्ताऽलाब्वादिपात्राणामेकस्यापिनसंग्रहः। भिक्षोर्भैक्ष्यभुजश्चापिपात्रलोपःसउच्यते ॥ ३५ ॥ शुश्रूषालाभपूजार्थं
यशोऽर्थंवापरिग्रहः। शिष्याणांनतुकारुण्यात्सज्ञेयःशिष्यसंग्रहः ॥ ३६ ॥ विद्यादिनंप्रकाशत्वादविद्याराचिरुच्यते। विद्या
ऽभ्यासेप्रमादोयः सदिवास्वापउच्यते ॥ ३७ ॥ अध्यात्मिकींकथांमुक्त्वाभैक्ष्यचर्यांसुरस्तुतिम्। अनुग्रहंपरिप्रश्नान्वृथालापःसउ
च्यते ॥ ३८ ॥ स्थावरंजंगमंवीजंतैजसंविषमायुधं। षडेतानिनगृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥ ३९ ॥ स्मृती। मधुमांसंचमद्यं
चतांवूलंतैलमौषधम्। वर्ज्यान्यष्टौयतेर्दूगत्त्तथाकांतांचकांचनं ॥ ४० ॥ नशिष्यानमुवध्नीतमठान्नारभेतक्वचित्। नव्याख्या

सुपयुञ्जीतनसेवेतराजमन्दिरं ॥ ४१ ॥ विष्णुस्मृ॰। वानप्रस्थगृहस्थाभ्यांप्रीतिंयत्नेनवर्जयेत्। ग्रामांतेनिर्जनेदेशेनित्यंकिल
निकेतनः ॥ ४२ ॥ वृद्धानामातुराणांचभीरूणांसङ्गवर्जितम्। ग्रामेवाथपुरेवापिवासोनैकत्रदुष्यति ॥ ४३ ॥ अङ्गिराः। नती
र्थसेवीचात्यंतोनोपवासपरोयतिः। नचाऽध्यापनशीलःस्यान्नव्याख्यानपरोभवेत् ॥४४॥ प्रतिग्रहंनगृह्णीयान्नचैवान्यंप्रदापयेत्।
प्रेरयेद्वातथाभिक्षुर्नस्वप्नेपिकथंचन ॥ ४५ ॥ क्रतुः। दासींदासंगृहंयानंगोभूधान्यंधनंरसान्। प्रतिगृह्ययतिर्ग्रामंहन्यात्कुलश
तत्रयं ॥४६॥ आविकंपट्टकंवासस्तूलिकांमंचकंमधु। शुक्लवस्त्रंचयानंचताम्बूलंस्त्रियमेवच। प्रतिगृह्यकुलंहन्यात्प्रतिगृह्णाति
यस्यच ॥ ४७ ॥ पुष्पशाखापल्लवंवाफलमूलतृणादिकम्। भंज्याद्वियस्तुसंन्यासीनरकेपततिध्रुवम् ॥ ४८ ॥ अङ्गिराः। क्षेत्रं
गावोहिरण्यंचयतेर्यस्यपरिग्रहः। तादृशंकल्मषंदृष्ट्वासचैलोजलमाविशेत् ॥ ४९ ॥ जावालः। अन्नदानपरोभिक्षुर्वस्त्रादीनां
चसंग्रही। उभौतौमंदबुद्धित्वात्पूतिनरकशायिनौ ॥ ५० ॥ मनुः। आविकंत्वधिकंवस्त्रंतूल्यंतूलिपटींतथा। प्रतिगृह्यय
तिश्चैतान्पततेनात्रसंशयः ॥ ५१ ॥ व्यासः। क्रोधलोभपरोनित्यंनिद्राऽऽलस्यपरस्तथा। विषादीच्छेश्वरश्चैवप्रेयसोभ्रश्यतेद्विजः

॥ ५२ ॥ यतीनांकांचनंदत्वाताांबूलंब्रह्मचारिणां। चौराणामभयंदत्वादातापिनरकंव्रजेत् ॥ ५३ ॥ हारीतः। छेदनेभेदनेपा
कोयतिर्यस्तुप्रवर्त्तते। ताद्दशंकश्मलंदृष्ट्वाप्रेतशौचंविधीयते ॥ ५४ ॥ अङ्गिराः। विधवांकंचुकोपेतांसधवांकंचुकांविना। यतिं
चकंचुकोपेतंदृष्ट्वाचचक्षुर्निमीलयेत् ॥ ५५ ॥ चत्वारिपातनीयानियतीनामनुरब्रवीत्। औषधंसंनिधानंचएकान्नंकांस्यभोज
नम् ॥ ५६ ॥ एकान्नीकांस्यभोजीचभेषजीवस्तुसंग्रही। चत्वारोनरकंयांतिमनुःस्वायंभवोऽब्रवीत् ॥ ५७ ॥ मनुः। वालग्रां
स्वकृतग्रांश्वशुष्कानपितुधर्मतः। शरणाऽऽगतहंतृंश्वस्त्रीहंतृंश्वनसंविशेत् ॥ ५८ ॥ भारतेब्राह्मणगीतावा०। अहिंसाब्रह्मचर्यं
चसत्यमार्ज्जवमेवच। अक्रोधश्चानसूयाचदमोनित्यमपैशुनम्। अष्टस्वेतेषुयुक्तःस्याद्व्रतेषुसंयतेन्द्रियः ॥ ५९ ॥ नाददीतपरस्वा
निनगृह्णीयादयाचितः। नकिंचिद्विषयंभुक्त्वास्पृहयीततस्यवैपुनः॥ ६० ॥ नशिल्पजीविकांजीवेद्धिरण्यंनोतकामयेत्। नद्वेष्टा
नोपदेष्टाचभवेद्वैवंनिरुपस्कृतः॥ ६१॥ श्राणीयुक्तानिसर्वाणिहिंसायुक्तानियानिच। लोकसंग्रहधर्मंचनकुर्यान्नचकारयेत्॥ ६२॥
अनागतंचनध्यायेन्नातीतमनुचिंतयेत्। वर्त्तमानमुपेक्षेतकालाकांक्षीसमाहितः ॥ ६३ ॥ अत्रिः। कौपीनयुगलंकन्थादण्ड

मेकंपरिग्रहः। यतेःपरमहंसस्यनाधिकंतुविधीयते ॥ ६४ ॥ यदिवाकुरुतेरागादधिकस्यपरिग्रहम्। नरकंरौरवंगत्वातिर्य
ग्योनिषुजायते ॥ ६५ ॥ विशीर्णान्यमलान्येवचैलानिग्रथितानितु। कृत्वाकन्थांवहिर्वासोधारयेद्धातुरञ्जिताम् ॥ ६६ ॥ जावा
लस्मृ०। भूतानांप्रियकारीस्यान्नपरद्रोहकर्मधीः। नरावशीकृतायेनतेनदेवावशीकृताः ॥ ६७ ॥ अजिह्वःषंडकःपंगुरंधोव
धिरएवच। मुग्धश्चमुच्यतेभिक्षुःषड्भिरेतैर्नसंशयः ॥ ६८ ॥ इदमिष्टमिदंनेतियोऽश्नन्नपिनसज्जते। हितंसत्यंप्रियंवक्तितमजि
ह्वंप्रचक्षते ॥ ६९ ॥ अद्यजातांयथानारींतथाषोडशवार्षिकीं। शतवर्षांचयोदृष्ट्वानिर्विकारःसषंडकः ॥ ७० ॥ भिक्षार्थम
टनंयस्यविण्मूत्रकरणायच। योजनान्नपरंयातिसर्वथापंगुरेवसः ॥ ७१ ॥ तिष्ठतोव्रजतोवापियस्यचक्षुर्नदूरगम्। चतुर्युगांभु
वंत्यक्त्वापरिव्राट्सोंधउच्यते ॥ ७२ ॥ हितंमितंमनोहारिवचःशोकावहंचयत्। श्रुत्वापिनशृणोतियोवधिरःसप्रकीर्त्तितः
॥ ७३ ॥ सान्निध्येविषयाणांचसमर्थोऽविकलेन्द्रियः। सुप्तवद्वर्त्ततेनित्यंसभिक्षुर्मुग्धउच्यते ॥ ७४ ॥ रथ्यायांवहुवस्त्राणिभि
क्षासर्वत्रलभ्यते। भूमिःशय्यासुविस्तीर्णायतयःकेनदुःखिताः ॥ ७५ ॥ दक्षस्मृतिः। जायाभ्रातृसुतादीनांबंधूनांचशुभा

शुभं। दृष्ट्वाश्रुत्वानकंपेतशोकहर्षौत्यजेद्यतिः ॥ ७६ ॥ शंखस्मृ०। दृष्टाऽनिष्टेषुभोगेषुव्यसनाऽभ्युदयेषुच। उपशांतांवदेद्वाच
मपिवाशौर्हंतोभृशम् ॥ ७७ ॥ सत्यांवाचमहिंस्रांचवदेदनपवादिनीं। अतिवादांस्तितिक्षेतअनृशंसामपैशुनाम् ॥ ७८ ॥
पराशर०। ब्रह्मचर्यमहिंसाचसत्यमस्तेयमार्ज्जवं। वेदांतश्रवणंध्यानंभिक्षोःकार्याणिनित्यशः ॥ ७९ ॥ बृहस्पतिः। नैवाददी
तपाथेयंयतिःकिंचिदनापदि। कथमापत्सुगृह्णीयाद्यावदन्नायंभुज्यते ॥ ८० ॥ देवल०। आददीतप्रवृत्तेभ्यःसाधुभ्योधर्मसा
धनम्। नाददीतनिवृत्तेभ्यःप्रमादेनापिकथञ्चन ॥ ८१ ॥ यतिधर्मसमुच्चये। परमापद्गतेनापिनकार्यंस्तेयअल्पकः। स्तेयाद
प्यधिकःकश्चिन्नास्त्यऽधर्मइतिस्मृतः ॥ ८२ ॥ ब्रह्मा। दशव्रतान्यनुष्ठाययतिःकल्याणमश्नुते। तेषामेवाननुष्ठानान्नरकंससम
श्नुते ॥ ८३ ॥ दशव्रतानिसर्वेषांयतीनांविहितानिच। अहिंसासत्यमस्तेयब्रह्मचर्याऽपरिग्रहाः ॥ ८४ ॥ अक्रोधोगुरुशुश्रूषा
शौचंदुर्भुक्तिवर्ज्जनम्। वाङ्मनःकायचेष्टासुप्रमादस्यचवर्ज्जनम् ॥ ८५ ॥ वर्णाश्रमाणांधर्मोहिदेवस्थानेषुकारणम्। लिंगाऽ
भावात्तुकैवल्यमितिब्रह्मानुशासनम् ॥ ८६ ॥ नाऽत्यक्त्वासुखमाप्नोतिनाऽत्यक्त्वाविंदतेपरम्। नाऽत्यक्त्वाभयंशेतेसर्वंत्यक्त्वासुखीभ

वेत् ॥ ८७ ॥ मेधातिथिः । नसंभाषेत्स्त्रियंकांचित्पूर्वंदृष्टांनचस्मरेत् । कथांचवर्जयेत्तासांनपश्येल्लिखितामपि ॥ ८८ ॥
एतच्चतुष्टयंमोहात्स्त्रीणामाचरतोयतेः । चित्तंविक्रियतेऽवश्यंतद्विकारात्प्रणश्यति ॥ ८९ ॥ सुजीर्णोपिसुजीर्णासुविद्वान्स्त्री
षुनविश्वसेत् । सुजीर्णास्वपिकंथासुसज्जतेजीर्णमंवरम् ॥ ९० ॥ भागवते । स्त्रीणांतत्संगिनांसंगंत्यक्त्वादूरतआत्मवान् ।
क्षेमेविविक्तआसीनश्चिंतयेन्मामतंद्रितः ॥ ९१ ॥ वायुपुराणे । यस्तुप्रव्रजितोभूत्वापुनःसेवेतमैथुनं । षष्ठिवर्षसहस्राणिवि
ष्ठायांजायतेकृमिः ॥ ९२ ॥ शून्यागारेषुघोरेषुआखुर्भवतिदारुणः । सतिर्यक्स्याच्चतोगृध्रःश्वावैद्वादशवत्सराः ॥ ९३ ॥ खरो
विंशतिवर्षाणिदशवर्षाणिशूकरः । अपुष्पोऽफलितोवृक्षोजायतेकंटकान्वितः ॥ ९४ ॥ ततोदावाग्निनादग्धःस्थाणुर्भवतिका
ष्ठवत् ॥ पूर्णेवर्षसहस्रांतेजायतेब्रह्मराक्षसः । क्षुत्पिपासापरिश्रांतःक्रव्या
दोरुधिराशनः ॥ ९६ ॥ क्रमेणलभतेमोक्षंकुलस्योत्सादनेनच । चाण्डालगर्भसंभूतोजायतेनात्रसंशयः ॥ ९७ ॥ आहारशुद्धि
र्विनयःशौचमप्रतिकर्मच । सम्यग्दर्शनमित्येवंपंचैवोपव्रतानिच ॥ ९८ ॥ व्यासः । अहिंसासत्यमस्तेयंब्रह्मचर्यंतपःपरं ।

क्षमादयाचसंतोषोव्रतान्यस्यविशेषतः ॥ ९९ ॥ याज्ञवल्क्यः। अध्यात्मपुस्त विप्रैर्दत्तंगृह्णीतभिक्षुकः। नस्वयंद्रव्यमादायले
खयेद्दोषदर्शनात् ॥ २०० ॥ अत्रिः। मौनंयोगासनंयोगस्तितिक्षैकांतशीलता। निःस्पृहत्वंसमत्वंचसप्तैतान्येकदंडिनः॥१॥
दक्षः। वैणवेनत्रिदंडेननत्रिदंडीतिचोच्यते। अध्यात्मदंडयुक्तोयःसत्रिदंडीतिकथ्यते ॥ २ ॥ वागादिदंडयुक्तस्तुप्रत्यगा
त्मन्यऽवस्थितः। परेब्रह्मणिलीनोयःसत्रिदंडीव्यवस्थितः ॥ ३ ॥ वाग्दंडेमौनमातिष्ठेत्कर्मदंडेऽल्पभोजनम्। मानसेतुकृते दं
डेप्राणायामोविधीयते ॥ ४ ॥ एकोभिक्षुर्यथोक्तःस्याद्द्वितीयंमिथुनंस्मृतम्। त्रयोग्रामःसमाख्यातअतऊर्ध्वंनगरायते ॥ ५ ॥ नगरं
तुनकर्त्तव्यंग्रामोवामिथुनंतथा। एतत्त्रयंप्रकुर्वाणःस्वधर्माच्च्यवतेयतिः ॥ ६ ॥ राजवार्त्तादिवातेषांभिक्षावार्त्तापरस्परं। स्नेह
पैशुन्यमात्सर्यंसन्निकर्षात्प्रवर्त्तते ॥७॥ कथाचारेखलेसार्थेपुरेगोष्ठेत्वसद्गृहे। निवसेन्नयतिःषट्सुस्थानेष्वेतेषुकर्हिचित् ॥ ८ ॥
यमः। एकवासाअवासावाएकदृष्टिरलोलुपः। एकएवचरेन्नित्यंवर्षास्वेकत्रसंवसेत् ॥ ९ ॥ जलेजीवाःस्थलेजीवाआकाशेजीव
मालिनि। जीवमालाऽऽकुलेलोकेवर्षास्वेकत्रसंवसेत् ॥ १० ॥ मेधातिथिः। यावद्वर्षत्यऽकालेपियावत्क्लिन्नाचमेदिनी। ताव

न्नविचरेद्भिक्षुःस्वधर्ममनुपालयन् ॥ ११ ॥ अत्रिः। चतुरोऽयंवसेन्मासान्द्वौवाकौशिकवार्षिकौ। वृद्धाननुक्रमेणैवनमस्कृत्यवि
धानतः ॥ १२ ॥ वृद्धेभ्योनमस्कारानुक्रमस्त्वयतिधर्मसमुच्चयेदर्शितः। देवंकृष्णंमुनिंव्यासंभाष्यकारंगुरोर्गुरुम्। गुरुंदेवंगणाध्य
क्षंदुर्गांदेवींसरस्वतीम् ॥ १३ ॥ अत्रिः। द्वादश्यांपौर्णमास्यांवाकुर्यात्संकल्पमात्मवित्। अनेनविधिनाभिक्षुराषाढ्यांसुसमा
हितः ॥ १४ ॥ स्थानाभावाद्व्रजेत्तावद्यावद्भवतिपंचमी। प्रायश्चित्तेनयुज्येतपंचम्यूर्ध्वंव्रजेद्यदि ॥ १५ ॥ नाऽसमानसहायेषुनि
वसेद्योगवित्क्वचित्। वसेत्समानशीलेषुसुशीलेषुतपस्विषु ॥ १६ ॥ पितामातास्वसाभ्रातास्नुषाजायासुतस्तथा। ज्ञातिबंधु
सुहृद्वर्गोदुहितातत्सुतादयः ॥ १७॥ यस्मिन्देशेवसंत्येतेनतत्रदिवसंवसेत्। द्वेषःशोकोभवेत्तत्ररागहर्षादयोमलाः॥ १८॥
अश्रुपातंयदाकुर्याद्भिक्षुःशोकेनचार्दितः। योजनानांशतंगत्वातदापापात्प्रमुच्यते ॥ १९ ॥ कार्त्तिक्यांवापयित्वातुस्नापयित्वात्रि
विक्रमं। परस्परंचसंपूज्यक्षमापयित्वापरस्परम् ॥ २० ॥ आत्मवत्सर्वभूतानिपश्यन्भिक्षुश्चरेन्महीं। अंधवत्कुब्जवच्चापिबधिरो
न्मत्तपिशाचवत् ॥ २१ ॥ नचैकस्मिन्वसेद्ग्रामेनचैकस्मिन्सरित्तटे। शून्यागारेनचैकस्मिन्वसेच्छून्यालयेतथा ॥ २२ ॥ हिम

वद्विंध्ययोर्मध्येख्यातःपुण्यतमःश्रुतौ। देशःसरस्वतीतीरेकारोदायास्तुपश्चिमे ॥ २३ ॥ दग्धंचवह्निनापूर्वंपवित्रीकरणायवै।
योगज्ञानतपोध्यानसिद्ध्यर्थंवैमहात्मनां ॥ २४ ॥ तस्मिन्देशेसदाभिक्षुःस्वधर्मंपरिपालयन्। पर्यटेद्वैसदायोगीवीक्षयन्वसुधात
लम् ॥ २५ ॥ नरात्रौनचमध्याह्नेसंध्ययोर्नैवपर्यटेत्। नशून्येनचदुर्गेवाप्राणबाधकरेतथा ॥ २६ ॥ नामगोत्रादिचरणं देशंवासं
श्रुतंकुलम्। वयोवृत्तंबलंशीलंख्यापयेन्नैवसद्यतिः ॥ २७ ॥ स्कांदपुराणे। गंगाकूलेवसेन्नित्यंभिक्षुर्मोक्षपरायणः। सिद्धंक्षे
त्रंतुविज्ञेयंयावद्धनुशतत्रयम् ॥ २८ ॥ भविष्ये। ब्रह्मादिदेवलोकानांमुक्तेश्चप्रापयेन्नृणां। गंगैवपरमोहेतुःकलिकालेविशेष
तः ॥ २९ ॥ मनुः। संरक्षणार्थंजंतूनांरात्रावहनिवासदा। शरीरस्यात्ययेचैवसमीक्ष्यवसुधांचरेत् ॥ ३० ॥ दृष्टिपूतंन्यसेत्पा
दंवस्त्रपूतंपिबेज्जलं। सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् ॥ ३१ ॥ भारते। आत्मोत्कर्षंनमार्गेतपरेषांपरिनिंदया। स्वगुणै
रेवमार्गेतविप्रकर्षंपृथग्जनात् ॥ ३२ ॥ निर्गुणास्त्वेवभूयिष्ठमात्मसंभावितानराः। दोषैरन्यान्गुणवतःक्षिपंत्यात्मगुणक्षयात्
॥ ३३ ॥ अब्रुवन्कस्यचिन्निंदामात्मपूजामवर्णयन्। विपश्चिद्गुणसंपन्नःप्राप्नोतिसुमहद्यशः ॥ ३४ ॥ आकाशस्थाध्रुवंयत्रदोषंब्रूयु

विपश्चितां। आ[illegible]जाऽभिका।वैकोवसेत्तत्रपंडित: ॥३५॥ मध्यस्थएवतिष्ठेतप्रशंसानिंदयो:सम:। एतत्यविचंपरमंपारि
व्राजकआश्रमे ॥ ३६ ॥ [illegible]त्यद्गुणवादीय:परोक्षेचापिनिंदक:। समानव:श्ववल्लोकेनष्टलोकपराऽवर: ॥ ३७ ॥ तादृग्ज
नश्चतस्यापियद्ददातिजुहोतिच। परोक्षेणाऽपवादीयस्तन्नाशयतितत्क्षणात् ॥ ३८ ॥ तस्मात्प्राज्ञोनर:सद्यस्तादृशंपापचेत
सं। वर्ज्जयेत्साधुभिर्वर्ज्यंसारमेयामिषंयथा ॥ ३९ ॥ तंस्वकर्माणिकुर्वाणंप्रतिकर्त्तुंयइच्छति। भस्मकूटइवाऽबुद्धि:खरोरज
सिमज्जति ॥ ४० ॥ क्रतु:। वीजघ्नंतेजसंपाचंशुक्रोत्सर्गंसितांवरं। निशान्नंचदिवास्वप्नंयतीनांपातनानिषट् ॥ ४१ ॥ वाक्य
संग्रहकृद्वाक्ये। एवंस्मृत्यादिवाक्यानिधर्माणांवोधकानिवै। यतेर्यम्प्रधानानांसंगृहीतानिखल्विह ॥ ४२ ॥ अथसंन्यासिधर्मा
णांप्रायेणनियमात्मनां। वोधकान्यृषिवाक्यानिगृह्णामीहसमासत: ॥ ४३ ॥ मेधातिथि:। भिक्षाटनंतपोध्यानंस्नानंशौचंसुरा
र्चनं। कर्त्तव्यानिषडेतानियतीनांनृपदंडवत् ॥ ४४ ॥ अथशौचविधि:। मनु:। मूत्रोच्चारसमुत्सर्गंदिवाकुर्यादुदङ्मुख:।
दक्षिणाऽभिमुखोरात्रौसंध्ययोश्चयथादिवा ॥ ४५ ॥ छायायामंधकारेवाराचावहनिवाद्विज:। यथासुखमुख:कुर्यात्प्राणवाध

मयेषुच ॥ ४६ ॥ नमूत्रंपथिकुर्वीतनभस्मनिनगोव्रजे। नफालकृष्टेनजलेनचित्यांनचपर्वते। नजीर्णदेवायतनेनवल्मीकेकदा
चन ॥ ४७ ॥ नससत्वेषुगर्त्तेषुनगच्छन्नापिचस्थितः। ननदीतीरमासाद्यनचपर्वतमस्तके ॥ ४८ ॥ वाय्वऽग्निविप्रमादित्यमपः
पश्यंस्तथैवगाः। नकदाचनकुर्वीतविण्मूत्रस्यविसर्जनम् ॥ ४९ ॥ प्रत्यग्निंप्रतिसूर्यंचप्रतिसोमोदकद्विजान्। प्रतिगांप्रतिवा
तंचप्रज्ञानश्यतिमेहतः ॥ ५० ॥ आमवा०। शतहस्तंपरित्यज्यमूत्रंकुर्याज्जलाशयात्। शतद्वयेपुरीषंतुतीर्थेचैवचतुर्गुणम् ॥
५१ ॥ अत्रिः। शुद्ध्यर्थंचत्रिभिःकाष्ठैस्तृणैर्वापिनिकर्षयेत्। इतिपुरीषमलोत्सर्गात्प्रोक्तापृथ्व्याःसमावृतिः ॥ ५२ ॥ विष्णुपुराणे।
वल्मीकमूषकोत्खातांमृदमंतर्जलांतथा। शौचाऽवशिष्टांगेहाच्चमृदंशौचेविवर्जयेत् ॥ ५३ ॥ विष्णुस्मृतिः। अंतःप्राण्यवपन्नां
चहलोत्खातांचवर्जयेत्। अत्रिः। यस्मिन्देशेचयत्तोयंयाचयत्रचमृत्तिका। सैवतत्रप्रशस्तास्यात्तयाशौचंविधीयते ॥ ५४ ॥
तीर्थेशौचंनकुर्वीतकुर्वीतोद्धृतवारिणा। उदकपानाऽभावेत्वादित्यपुराणेतीर्थेपिशौचप्रकारउक्तः। आदित्यपु०। रत्निमात्रंज
लंत्यक्त्वाकुर्याच्छौचमनुद्धृतैः। पश्चात्तच्छोधयेत्तीर्थमन्यथात्वशुचिर्भवेत् ॥ ५५ ॥ दक्षः। एकालिंगेतिस्रोवामेउभयोर्द्वेतुमृत्ति

मु० सा० १७

के पंचाऽपानेदशैकस्मिन्नुभयोःसप्तमृत्तिकाः ॥ ५६ ॥ एतच्छौचंगृहस्थस्यद्विगुणंब्रह्मचारिणः व प्रस्थस्यात्रिगुणंयतीनां
चचतुर्गुणम् ॥ ५७ ॥ एतच्छौचमदृष्टार्थंदृष्टार्थंशौचंतुमनुनादर्शितं मनुः । यावन्नाऽपैत्यऽमेध्याक्तो ध पश्च ल्कृतः । द्या
रिदेयंस्यात्सर्वासुद्रव्यशुद्धिषु ॥ ५८ ॥ देवलः । धर्म्यंदक्षिणंहस्तमध नयोजयेत् । तथैवव हस्त मेरुर्द्धनशाय त्
तास्यातरषास्यात्कारणादुभयदि ॥ ५९ ॥ दक्षः । यदिवाविहितंशौचंतदर्द्धंनिशिकीर्त्तितं । तदर्द्धमातुरेप्रोक्तमातुरस्या
नि ६ अथदंतधाव विधिः । वृद्धशातातपः । मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः । तस्मात्सर्वप्रयत्नेनभक्षयेद्दंतधा
६ विष्णुः । द्वादशांगुलंविप्रेषुकाष्ठमाहुर्मनीषिणः । क्षत्रविट्शूद्रजातीनांनवषट्चतुरंगुलम् ॥ ६२ ॥ कंटकिक्षीर
१ त्यद दशांगुलमव्रणं कनिष्ठा स्थूलंकूर्चाग्रंसत्वगऽपर्वकम् ॥ ६३ ॥ नृसिंहपुराणे । अलाभेदंतकाष्ठस्यप्रतिषिद्धेतथा
दिने । अप द ंडूषैर्मुखशुद्धिर्भविष्यति ॥ ६४ ॥ निषिद्धदिनानिचस्कंदपुराणेदर्शितानितथाचकाशीखंडे । प्रतिपद्दर्श
षष्ठीनवम्यादिवास ष्टसंयोगोदहेदाऽऽसप्तमंकुलम् ॥ ६५ ॥ दंतधावनार्थंवर्ज्यानिद्रव्याणिचयाज्ञवल्क्येनो

क्तानि। याज्ञवल्क्यः। इष्टिकालोष्टपाषाणैर्नखैरंगुलिभिस्तथा। मृक्तांचानामिकांगुष्ठौवर्जयेद्दंतधावने ॥ ६६ ॥ अथस्नानवि
धिः। पराशरः। स्नानानिपंचपुण्यानिकीर्त्तितानिमनीषिभिः। आग्नेयंवारुणंब्राह्मंवायव्यंदिव्यमेवच ॥ ६७ ॥ आग्नेयंभस्म
नास्नानमवगाह्यतुवारुणम्। आपोहिष्ठेतिचब्राह्मंवायव्यंगोरजःस्मृतम् ॥ ६८ ॥ यत्तुसातपवर्षेणतत्स्नानंदिव्यमुच्यते।
तत्रस्नात्वाचगंगायांस्नातोभवतिमानवः ॥ ६९ ॥ व्यासः। चतस्रोघटिकाःप्रातररुणोदयउच्यते। यतीनांस्नानकालोयंगंगां
भःसदृशःस्मृतः ॥ ७० ॥ कपिलः। प्रातःस्नानेत्वऽशक्तश्चेत्कापिलंस्नानमाचरेत्। तत्राप्यऽसामर्थ्ययुक्तेमंत्रस्नानंविधीयते ॥ ७१ ॥
नाभेरधःप्रविश्याप्सुकटिंप्रक्षाल्यमृज्जलैः। जलार्द्रकर्प्पटेनागशोधनंकापिलंस्मृतम् ॥ ७२ ॥ सायंप्रातरसामर्थ्येसायमेवाऽथवा
पुनः। परिवर्त्यचकौपीनंमंत्रस्नानंविधीयते ॥ ७३ ॥ पराशरः। चक्षूरोगीशिरोरोगीकंठरोगीकफाऽधिकः। कंठस्नानंप्रकु
र्वीतशिरःस्नानफलंलभेत् ॥ ७४ ॥ स्नानेप्यऽशक्तःस्नायीतनित्यमुष्णेनवारिणा। तैलाऽभ्यंगोनदुष्येतव्रणीनांवातरोगिणाम् ॥
७५ ॥ अथाचमनविधिः। शंखः। दक्षिणंतुकरंकृत्वागोकर्णाऽऽकृतिवत्पुनः। माषमज्जनमात्रास्तुसंगृह्यत्रिःपिबेदपः ॥ ७६ ॥

यतिश्चब्रह्मचारीचनाचमेच्चर्मवारिणा। वानप्रस्थोगृहस्थश्चदैवेपित्र्येचकर्मणि॥ ७७॥ अथाचमननिमित्तानि। मनुः।
सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वाऽनृतंवचः। पीत्वाऽपोऽध्येष्यमाणश्चआचमेत्प्रयतोपिसन्॥ ७८॥ शातातपः। दंतलग्नेफले
मूलेअभुयागाहुतीषुच। स्नेहेसोमेचचुदंडेनैवोच्छिष्टोभवेद्द्विजः॥ ७९॥ स्पृशंतिबिंदवःपादौयआचामयतःकरात्। नतै
रुच्छिष्टभावःस्यात्तुल्यास्तेभूमिगैःसह॥ ८०॥ अथसुरार्चनविधिः। शौनकः। स्नानंमहेश्वरादिभ्योचमिच्छेज्जनार्दनात्।
प्रणामेहंडवद्भूमौनमस्कारेणचार्चयेत्॥ ८१॥ व्यासः। पक्वंहितुलसीपत्रंशुष्कंपर्युषितंचयत्। आनीयतत्प्रयत्नेनपूजयेत्पुरुषो
त्तमम्॥ ८२॥ भावपुष्पैर्यजेद्योगीवाह्यैर्वाश्रद्धयान्वितः। तदर्थंपुष्पहिंसायांनभवेद्धिंसकःक्वचित्॥ ८३॥ स्कांदपुराणे।
अयमेवपरोधर्मस्त्विदमेवपरंतपः। इदमेवपरंतीर्थंविष्णुपादांबुजंपिवेत्॥ ८४॥ अथप्राणायामविधिः। यमः। द्वादशावर्तनं
यत्तुसप्रणवस्यमनोहृदि। प्राणायामोयतेःप्रोक्तःप्राणानायम्योमिति। कूर्मपुराणे। प्राणस्तुदेहजोवायुरायामस्तन्निरोधनम्॥
८५॥ अथजपविधिः। कूर्मपुराणे। जपकालेनभाषेतनान्यानिसेवयेद्बुधः। नकंपयेच्छिरोग्रीवांदंतान्नैवप्रकाशयेत्॥ ८६॥

पद्मपुराणे । परमहंसव्रतिनस्तुप्रणवाऽभ्यासशालिनः । यद्यनुत्पन्नमात्मनोज्ञानंविरक्तःसंयतेंद्रियः । यावज्जीवंजपेन्मंत्रंप्रणवं
ब्रह्मणोवपुः ॥ ८७ ॥ याज्ञवल्क्यः । जपश्चद्विविधःप्रोक्तोवाचिकोमानसस्तथा । वाचिकोपांशुरुच्चैश्चद्विविधःपरिकीर्त्तितः ॥
८८ ॥ उच्चैर्जपादुपांशुश्चसहस्रगुणउच्यते । मानसश्चतथोपांशोःसहस्रगुणउच्यते ॥ ८९ ॥ संप्रदायविदः । यस्तुद्वादशसाह
स्रंनित्यंप्रणवमभ्यसेत् । तस्यद्वादशमासैस्तुपरंब्रह्मप्रकाशते ॥ ९० ॥ यःशब्दोबोधजननःपरेषांशृण्वतांस्फुटम् । स्वाध्यायोवा
चिकःप्रोक्तउपांशोरथलक्षणम् ॥ ९१ ॥ ओष्ठयोःस्पंदमात्रेणपरस्याऽशब्दबोधकः । उपांशुरेषनिर्दिष्टःसाहस्रोवाचिकाज्जपात्
॥ ९२ ॥ अथध्यानविधिः । शून्यागारेगुहायांवापर्वतेषुवनेषुच । तत्रासीनःप्रसन्नात्माध्यानंविधिवदाचरेत् ॥ ९३ ॥ ब्रह्मोप
निषच्छ्रुतिः । आत्मानमरणिंकृत्वाप्रणवंचोत्तरारणिं । ध्याननिर्मथनाभ्यासाद्देवंपश्येन्निगूढवत् ॥ ९४ ॥ अथनतिविधिः । योभ
वेत्पूर्वसंन्यासीतुल्योवैधर्मतोयदि । तस्मैप्रणामःकर्त्तव्योनेतरायकदाचन ॥ ९५ ॥ अथभिक्षाविधिः । याज्ञवल्क्यः । अप्रमत्त
श्चरेद्भैक्षंसायाह्नेऽनभिलक्षितः । रहितेभिक्षुकैर्ग्रामेयात्रामात्रमलोलुपः ॥ ९६ ॥ मनुः । नचोत्पातनिमित्ताभ्यांननक्षत्रांगवि

थया। नानुशासनवादाभ्यांभिक्षांलिप्सेतकर्हिचित् ॥ ९७ ॥ अभिपूजितलाभांस्तुजुगुप्सेतैवसर्वश: । अभिपूजितलाभैश्चयति
र्मुक्तोपिवध्यते ॥ ९८ ॥ एककालंचरेद्भैक्ष्यंनप्रसज्जेतविस्तरे। भैक्ष्येप्रसक्तोहियतिर्विषयेष्वपिसज्जति ॥ ९९ ॥ दत्तात्रेय: ।
याचिताऽयाचिताभ्यांचभिक्षाभ्यांकल्पयेत्स्थितिं। माधुकरंयाचितंस्यात्प्राक्प्रणीतमयाचितम् ॥ ३०० ॥ उशना: । माधुकर
मसंक्लृप्तंप्राक्प्रणीतमयाचितम्। तात्कालिकंचोपपन्नंभैक्ष्यंपंचविधंस्मृतम् ॥ १ ॥ मन:संकल्परहितान्गृहांस्त्रीन्पंचसप्तवा। मधु
वदाहरणंयत्तन्माधुकरमितिस्मृतं ॥ २ ॥ शयनोत्थापनात्प्राग्यत्प्रार्थितंभक्तिसंयुतै:। तत्प्राक्प्रणीतमित्याहभगवानुशनामुनि:
॥ ३ ॥ भिक्षाटनसमुद्योगात्प्राक्केनापिनिमंत्रितम्। अयाचितंतुतद्भैक्ष्यंतद्भोक्तव्यंमनुरब्रवीत् ॥ ४ ॥ उपस्थानेनयत्प्रोक्तंभिक्षार्थं
ब्राह्मणेनहि। तात्कालिकमितिख्यातंतदत्तव्यंमुमुक्षुणा ॥ ५ ॥ सिद्धमन्नंभक्तजनैरानीतंयन्मठंप्रति। उपपन्नंतदित्याहुर्मुन
योमोक्षकांक्षिण: ॥ ६ ॥ भिक्षा:पंचविधाह्येता:सोमपानसमा:स्मृता:। तासामेकतमयापिवर्त्तयन्सिद्धिमाप्नुयात् ॥ ७ ॥ संव
र्त्त:। अष्टौभिक्षा:समादायसमुनि:सप्तपंचवा। अद्भि:प्रक्षाल्यता:सर्वास्ततोऽश्नीयाच्चवाग्यत: ॥ ८ ॥ याज्ञवल्क्य:। संभवेव

ह्रुगेहानांनतुतेष्वेवनित्यशः। भिक्षाटनमुपक्रम्यक्वचिल्लोभेनभैक्षभुक्। नातिक्रमेद्गृहंमोहाद्यत्रबाधोनविद्यते॥ ९॥ गृहा
क्रमणंकुर्याद्यत्रलोभादिनायतिः। प्राणायामशतंकुर्यात्प्रायश्चित्तंतथायतिः॥ १०॥ दत्तात्रेयः। भिक्षाटनेस्त्रियःकाश्चिच्छ्रो
यार्णागृहेगृहे। तासांविलोकनंकार्यंयथामातुःस्वसुस्तथा॥ ११॥ आत्मसंमितमाहारमाहरेदात्मवान्यतिः। अत्यंतक्षुधि
स्यापिसमाधिर्नैवजायते॥ १२॥ यमः। आहारस्यचतुर्भागमर्द्धंवाप्याहरेद्यतिः। युवाचैवारुजःशक्तःप्रसंगंतत्रवर्जयेत्॥ १३॥ अ
प्रसंगाद्बलंदर्पोविषयाऽऽसक्तिरेवच। कामःक्रोधस्तथालोभःपतनंनरकेतथा॥ १४॥ अत्रिः। अनिंद्यंवैव्रजेद्गेहंनिंद्यंगेहंतुवर्जयेत्।
अनावृतेविशेद्द्वारिगेहेनैवावृतेव्रजेत्॥ १५॥ नवीक्षेद्द्वाररंध्रेणभिक्षांलिप्सुःक्वचिद्यतिः। नकुर्याद्वैक्वचिद्घोषंनद्वारंताडयेत्
क्वचित्॥ १६॥ मेधातिथिः। अकार्पण्यंतुवक्तव्यंमन्यंतेयत्रमानवाः। निरीक्ष्यंतेत्वनुद्विग्नास्तद्गृहंयत्नतोव्रजेत्॥ १७॥ शौ
नकः। पीडयित्वापिस्वात्मानमल्पान्नंसंप्रयच्छति। साभिक्षाहिंसिताज्ञेयातादृशींवर्जयेद्यतिः॥ १८॥ पंचाहंसप्तरात्रंवायत्रभि
क्षानलभ्यते। तद्गृहंवर्जयेद्भिक्षुश्चांडालगृहवत्सदा॥ १९॥ अत्रिः। गोदोहमन्नपाकंवासक्तुपेषणमेववा। एकंकालंप्रतीक्षेत

दर्शनेनविनायति: ॥ २० ॥ चणमेकंनतिष्ठेद्वैगृहिणोदर्शनाद्यति: । ससंभ्रमंचनेच्छेतभिक्षाऽऽदानार्थमुत्तमम् ॥ २१ ॥ नकुप्येन्न
चकंपेतनहृष्येन्नैवकुत्सयेत् । अतिक्रम्यगृहंलोभान्नपुनस्तद्गृहंविशेत् ॥ २२ ॥ मेधातिथि: । अदुष्ठाऽपतितंसाधुंयतिर्य:परि
वर्जयेत् । सतस्यसुकृतंदत्वादु:कृतंप्रतिपद्यते ॥ २३ ॥ तथैवचगृहस्थस्यनिराशोभिक्षुकोगत: । हुतंदत्तंतपोऽधीतंसर्वमादा
यगच्छति ॥ २४ ॥ वौधायन: । चरेन्माधुकरींवृत्तिंयतिर्म्लेच्छगृहादपि । एकान्नंतुनभुंजीतवृहस्पतिसमादपि ॥ २५ ॥ भैक्षं
सर्ववर्णेषुएकान्नंवाद्विजेषुच । नचैकान्नंद्विजेषुस्यात्कामंस्यात्सार्ववर्णिकं ॥ २६ ॥ अत्रि: । श्रोत्रियान्नंनभिक्षेतश्रद्धाभक्तिवहि
ष्कृतं । व्रात्यस्यापिगृहेभिक्षेच्छ्रद्धाभक्तिपुरष्कृतम् ॥ २७ ॥ व्यास: । अश्रद्धानस्यभोक्तव्यंचौरस्यापिविशेषत: । नत्वेववहुयाज्य
स्ययश्चोपनयतेवहून् ॥ २८ ॥ मनु: । गर्भाष्टमेऽब्देकुर्वीतब्राह्मणस्योपनायनं । गर्भादेकादशेराज्ञोगर्भात्तुद्वादशेविश: ॥ २९ ॥
आषोडशाद्ब्राह्मणस्यसावित्रीनातिवर्त्तते । आद्विविंशात्क्षत्रवंधोराचतुर्विंशतेर्विश: ॥ ३० ॥ अतऊर्द्ध्वंत्रयोप्येतेयथाकालमसंस्कृ
ता: । सावित्रीपतिताव्रात्याभवंत्यार्यविगर्हिता: ॥ ३१ ॥ अत्रि: । द्वावेवाश्रमिणौभोज्यौवानप्रस्थोगृहीतथा । अभोज्यमन्नम

मन्येषांसर्वेषामपिलिंगिनाम् ॥ ३२ ॥ बृहस्पतिः । यत्यन्नंब्रह्मचार्य्यन्नमवीरान्नंतथैवच । शूद्रान्नंचतथाभिक्षुर्वर्जयेत्परदारवत्
॥ ३३ ॥ व्यासः । यत्यन्नंतुनभोक्तव्यंप्राणैःकंठगतैरपि । गोमांसस्यसमंज्ञेयंसुराबिंदुसमंजलम् ॥ ३४ ॥ जाबालः । स्वधर्मात्प्र
च्युतायेवैपुरुषायोषितोपिवा । अवीरास्तेसदाज्ञेयानित्यंसद्भिर्विगर्हिताः ॥ ३५ ॥ मेधातिथिः । ब्राह्मणाच्चनियविशांमेध्यानां
भैक्षमाचरेत् । तत्राप्यऽसंभवेपूर्वादाददीतोत्तरोत्तरात् ॥ ३६ ॥ द्विजाऽभावेतुसंप्राप्तेउपवासत्रयंगते । भैक्ष्यंशूद्रादपिग्राह्यं
रक्षेत्प्राणान्द्विजोत्तमः ॥ ३७ ॥ पराशरः । दासनापितगोपालकुलमित्राणिसीरिणः । एतेशूद्रेषुभोज्यान्नाःयश्चात्मानंनिवेद
येत् ॥ ३८ ॥ मद्यमांसरतंनित्यंनीचकर्मप्रवर्त्तकम् । तंशूद्रंवर्जयेद्दूरंश्वपाकमिवदूरतः ॥ ३९ ॥ द्विजशुश्रूषणरतान्मद्यमांस
विवर्जितान् । स्वकर्मनिरतान्नित्यंशूद्रान्नान्नंत्यजेद्बुधः ॥ ४० ॥ अत्रिः । कुटंबसंकटंचैवमलिनोपहतंगृहम् । पीडयाऽन्नंप्रयच्छे
द्यस्तद्गृहंवर्जयेद्यतिः ॥ ४१ ॥ नाश्नंतिह्यशुचेर्देवानाश्नंतिवृषलीपतेः । स्त्रीजितान्नंनचाश्नंतितदन्नंवर्जयेद्यतिः ॥ ४२ ॥ चि
कित्सकस्यमृगयाशल्यहर्तुश्चपाशिनः । कुलटाषंडयोरन्नमुद्यतंसंत्यजेद्यतिः ॥ ४३ ॥ यातुपर्युषिताभिक्षानैवेद्येकल्पितातुया ।

तामभोज्यांविजानीयाद्दाताचनरकंव्रजेत् ॥ ४४ ॥ आयसेनतुपात्रेणयदन्नमुपदीयते। भोक्ताविष्ठासमंभुंक्ते दाताचनरकंव्रजेत् ॥ ४५ ॥ उद्यतामाहृतांभिक्षांपुरस्तादप्रचोदिताम्। भोज्यांप्रजापतिर्मेने अपिदुष्कृतकर्मणः ॥ ४६ ॥ पितामहः। सौवर्ण लौहरौप्येषुताम्राद्यश्ममयेषुच। अश्नन्भिक्षुर्नदुष्येतदुष्यतेतुपरिग्रहात् ॥ ४७ ॥ आदित्यपुराणे। एकवासाविशुद्धात्मा मंदगामीयुगांतदृक्। यथालब्धंतदश्नीयात्पूजासंस्कारवर्जितः ॥ ४८ ॥ विष्णुः। यदिभैक्षंसमादायपर्युषेद्योगवित्तमः। सपर्युषितदोषेणभिक्षुर्भवतिकिल्विषी ॥ ४९ ॥ जाबालः। यत्किंचिद्दीयमानंतुगृहिणीकरसंस्थितं। भिक्षुर्भिक्षांनगृह्णीयात्काकयोनिषुजायते ॥ ५० ॥ नारदः। हव्यंकव्यंचराजेंद्रनाश्नीयादात्मवान्यतिः। हव्यकव्यपरोभिक्षुःपतत्येवनसंशयः ॥ ५१ ॥ श्राद्धभोजीयतिर्नित्यमाशुगच्छतिशूद्रताम्। तादृशंकश्मलंदृष्ट्वासचैलोजलमाविशेत् ॥ ५२ ॥ जैमिनिः। श्राद्धान्नंयस्यकुक्षौतुमुहूर्त्तमपिवर्त्तते। भिक्षोश्चत्वारिनश्यंतिआयुःप्रज्ञायशोबलम् ॥ ५३ ॥ बृहस्पतिः। श्रवणंमननंध्यानंस्वाध्यायंज्ञानमेवच। संध्येनश्वरतांयातिसकृच्छ्राद्धान्नभोजनात् ॥ ५४ ॥ अंतःकरणशुद्धिस्तुनस्यात्तस्यैवसर्वदा। यदान्नंप्रेतयोग्यंचभवेत्तत्कल्मषाच

तः ॥ ५५ ॥ परान्नंनैवगृह्णीयाद्भिक्षुःस्वाश्रमपालकः। परान्नवर्ज्जनादेवभिक्षुर्भिक्षुरितिस्मृतः ॥ ५६ ॥ अथभिक्षार्थंयति
पात्रविधिः। याज्ञवल्क्यः। यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच। सलिलंशुद्धिरेतेषांगोवालैश्चावघर्षणम् ॥ ५७ ॥ तत्रगांदा
रुशृंगास्थ्नांगोवालैःफलसंभुवां। अमेध्याऽक्तस्यमृत्तोयैःशुद्धिर्गंधादिकर्षणात् ॥ ५८ ॥ अमेध्याःशरीरजामलास्तैरक्तस्यलिप्त
स्यपात्रस्यतेचमनुनादर्शिताः। वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माऽश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः ॥ ५९ ॥
ब्रह्मा। द्वापरादियुगेष्वेवपात्रभोजीभवेद्यतिः। कलौनैवतुभुंजीतस्वपात्रेयोगवित्तमः ॥ ६० ॥ अत्रिः। मृद्दार्वलाबुजंपात्रंवै
णवंतांतवौपलं। पार्णंतार्णंतथाक्षौमंपात्रंपर्णपुटंतथा। उक्तानियतिपात्राणिब्रह्मणाविश्वयोनिना ॥ ६१ ॥ करेकर्पटकेचैवआ
यसेताम्रभाजने। भुंजन्भिक्षुर्नलिप्येतलिप्यंतेगृहमेधिनः ॥ ६२ ॥ अथविदध्यतिभिक्षाविधिवाक्यानिशौनकः। पाणिपात्रंचरन्यो
गीनासकृद्भैक्षमाचरेत्। तिष्ठन्भुंज्याच्चरन्भुंज्यान्मध्येनाचमनंतथा ॥ ६३ ॥ गौतमः। पात्रमस्यभवेत्पाणिस्तेननित्यंगृहानटेत्।
हविःप्राश्नययथाचम्यनिराहारोभवेद्गृही। प्राश्याचम्यतथाभिक्षुर्निराहारोगृहेगृहे ॥ ६४ ॥ वशिष्ठः। भिक्षाऽटनंप्रकुर्वाणोह्यमे

ध्यंश्वादिवास्पृशेत्। भिक्षांगृहीत्वास्नात्वाचप्राणायामान्षडाचरेत्॥ ६५॥ अमेध्यनिचयंचैवस्पृष्ट्वादैवलकंयतिः। सपाचोवि
धिवत्स्नात्वाविष्णुंध्यात्वाविमुच्यते॥ ६६॥ पादत्राणेस्थितौपादावस्पृश्यंस्पृशतोयदि। पादत्राणपरित्यागेआचांतःशुद्धिमाप्नु
यात्॥ ६७॥ उदक्याश्वपचांडालचौरनग्नकपालिभिः। स्पृष्टांभिक्षांत्यजेद्भिक्षुःसचैलोजलमाविशेत्॥ ६८॥ कुड्येकाष्ठे
रथेमंचेनौकायांगजवृक्षयोः। तृणौघजलसंघातेस्पृष्टाऽस्पृष्टिर्नविद्यते॥ ६९॥ जमदग्निः। श्वकाकक्रोडवेश्याऽविखरोष्ट्रस्पृ
श्यंयतिः। सभिक्षुस्तुजलेमग्नःशुध्येज्जप्त्वाऽघमर्षणं॥ ७०॥ अत्रिः। श्वकाकगर्दभैरुष्ट्रैर्जंबुकैर्वानरैस्तथा। चांडालपतितैःस्पृ
ष्टंयतिःपात्रंविसर्जयेत्॥ ७१॥ पराशरः। मार्जारमक्षिकाकीटपतंगक्रिमिदर्दुराः। मेध्याऽमेध्यंस्पृशंतोपिनोच्छिष्टंमनुर
ब्रवीत्॥ ७२॥ आसवा०। नस्पृशेत्सव्यहस्तेनभुंजानोऽन्नंकदाचन। नपादौनशिरोवस्तिंनपदाभाजनंस्पृशेत्॥ ७३॥ यमः।
अष्टौग्रासायतेःप्रोक्ताःषोडशवनवासिनः। द्वात्रिंशत्तुगृहस्थानांयथेष्टंब्रह्मचारिणः॥ ७४॥ व्याघ्रः। चतुरंगुलमुत्सेधंचतुरंगु
लमायतं। एतद्ग्रासप्रमाणंतुव्याघ्रेणपरिभाषितं। भंक्ताभंक्तोपभुंजीतनियमार्थंयतिरात्मवान्॥ ७५॥ अथभिक्षास्तुतिः।

मनुः। नापोमूत्रपुरीषाभ्यांनाग्निर्दहनकर्मणा। नवायुःस्पर्शदोषेणनान्नदोषेणमस्करी ॥ ७६ ॥ यमः। गङ्गातोयाऽभिषिक्ताभि
र्यांयोस्नातियोगवित्। नतुक्रतुशतैरिष्टंफलंप्राप्नोतिमानवः ॥ ७७ ॥ गङ्गातोयंचभैक्षंचवैष्णवान्नंविशेषतः। आनखाग्रान्मो
चयेत्पापंमन्त्रपूतंहविर्यथा ॥ ७८ ॥ शातातपः। भिक्षामाधुकरीनामसर्वपापप्रणाशिनी। अवधूताचपूताचसोमपानंदिनेदिने
॥ ७९ ॥ भिक्षाऽऽहारोनिराहारोभिक्षानैवप्रतिग्रहः। श्रोत्रियान्नंचभैक्षंचहुतशेषंचयद्धविः। आनखाग्राच्छोधयेत्पापंतुषाऽ
ग्निरिवकाञ्चनम् ॥ ८० ॥ गङ्गायाःसलिलंपुण्यंशालग्रामशिलातथा। भिक्षान्नंपञ्चगव्यंचपवित्राणियुगेयुगे ॥ ८१ ॥ कण्वः।
अम्बिन्दुंयःकुशाग्रेणमासिमासिसमश्नुते। निरपेक्षस्तुभिक्षाशीसतुतस्माद्विशिष्यते ॥ ८२ ॥ याज्ञवल्क्यः। नक्तात्परश्चोपवास
उपवासादयाचितम्। अयाचितात्परंभैक्षंतस्माद्भैक्षेणवर्त्तयेत् ॥ ८३ ॥ अथनिषिद्धसेविनिन्दाऽभक्तयतिभिक्षापरवाक्यानि।
अत्रिः। अपक्वंयदिवापक्वंपाचयेद्यःक्वचिद्यतिः। स्वधर्मस्यतुलोपेनतिर्यग्योनिंव्रजेद्यतिः ॥ ८४ ॥ आश्व०। तितिक्षाज्ञान
वैराग्यशमादिगुणवर्जितः। भिक्षामात्रेणयोजीवेत्सभिक्षुर्यतिवृत्तिहा ॥ ८५ ॥ सपापीपशुवन्नरइत्यपिक्वचित्पाठः। एकान्ना

प्र० सा० ३

श्रीभवेद्यस्तुकदाचित्स्पृष्टोयतिः। तस्यवैनिष्कृतिर्नास्तिप्रायश्चित्तायुतैरपि ॥ ८६ ॥ पराशरः। यतीनामातुराणांचवृद्धानां
दीर्घरोगिणां। एकान्नेनैवदोषोस्तिएकस्यापिदिनेदिने ॥ ८७ ॥ अत्रिः। अयाचितंयथालाभंभोजनाच्छादनंभवेत्। निमन्त्रि
तोऽथवाश्नीयात्स्वगुणांनप्रकाशयेत् ॥ ८८ ॥ सुजीर्णोऽतिकृशोयोगीदेशान्तादिविकलेन्द्रियः। पुत्रमित्रगुरुभ्रातृपत्नीभ्योभैक्ष
हरेत् ॥ ८९ ॥ पुनःशक्तंप्रतिदत्तात्रेयः। कृतेदेशंत्यजेद्ग्रामंत्रेतायांद्वापरेकुलम्। कर्त्तारंतुकलौदुष्टंत्यक्त्वाभैक्षंसमाचरेत् ॥
९ ॥ अङ्गिराः। संन्यासंचैवयःकृत्वापुनस्तिष्ठतेद्विजः। नतस्यनिष्कृतिःकार्यास्वधर्मात्प्रच्युतस्यवै ॥ ९१ ॥ विष्णुः। आरू
ढं नैष्ठिकंधर्मंपुनरावर्त्तयेद्यदि। आरूढपतितोज्ञेयःसर्वधर्मबहिष्कृतः ॥ ९२ ॥ चाण्डालाःप्रत्यवसिताःपारिव्राजकतापसाः।
ते ।जातान्यपत्यानिचाण्डालैःसहवासयेत् ॥ ९३ ॥ अङ्गिराः। आरूढपतितोहन्तिदशपूर्वान्दशपरान्। निस्तारयतितानेव
हिसम्यग्व्यवस्थितः ॥ ९४ ॥ परमहंसोपनिषच्छ्रुतिः। काष्ठदण्डोधृतोयेनसर्वाशीज्ञानवर्जितः। सयातिनरकान्घोरान्महारौ
संज्ञिकान् ॥ ९५ ॥ दक्षः। पारिव्राज्यंगृहीत्वातुयःस्वधर्मेनतिष्ठति। श्वपादेनाङ्कयित्वातंराजाशीघ्रंप्रवासयेत् ॥ ९६ ॥

व्यासः। द्वाविमौनविराजेतेविपरीतेनकर्मणा। निरारम्भोगृहस्थश्चकार्यवांश्चैवभिक्षुकः ॥९७॥ लिङ्गंसत्यपिखल्वस्मिन्ज्ञानमे
वहिकारणम्। निर्मोक्षायचेद्भूतानांलिङ्गग्राह्योनिरर्थकः ॥ ९८ ॥ अथप्रायश्चित्तविधिःजमदग्निः। मूलाङ्कुरेषुपत्रेषुपुष्पेषुचफ
लेषुच। स्थावराणांचोपमर्दे प्राणायामास्त्रयस्त्रयः॥९९॥ धान्यंवृक्षंलतांयस्तुस्थावरंजङ्गमंतथा। उत्पाटयतिमूढात्माअवीचीन
रकंव्रजेत् ॥ ४०० ॥ कृकलासेचोरगलेमण्डूकेगृहगोधिके। कुक्कुटादिषुभूतेषुदशाहंचार्द्रभोजनम् ॥ १ ॥ मार्जारमूषकेसर्पेस्थूल
मत्स्येषुपक्षिषु। नकुलादिषुभूतेषुचरेच्चान्द्रायणंयतिः ॥ २ ॥ पिपीलिकायांसूक्ष्मायांप्राणायामास्त्रयस्त्रयः। यूकायांमत्कुणेचैव
मसकेपञ्चनिर्दिशेत् ॥ ३ ॥ अकामादपिहिंसेतपशून्मृगादिकान्यतिः। कृच्छ्रातिकृच्छ्रौकुर्वीतचान्द्रायणमथापिवा॥ ४॥ मनुः।
तप्तकृच्छ्रंचरन्विप्रोजलक्षीरघृतानिलान्। प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायात्समाहितः ॥ ५ ॥ पराशरः। अपांपिबेत्तुत्रिपलं
द्विपलंतुपयःपिबेत्। पलमेकंपिबेत्सर्पिस्त्रिरात्रंचोष्णमारुतम् ॥ ६ ॥ आसवा०। दशार्द्धगुञ्जंप्रवदन्तिमाषं माषाह्वयैःषो
डशभिश्चकर्षम्। कर्षैश्चतुर्भिस्तुपलंतुलाज्ञाः कर्षंसुवर्णस्यसुवर्णसंज्ञम् ॥ ७ ॥ हारीतः। अहोरात्राच्चयान्जन्तून्हिनस्त्यज्ञा

 नतोयतिः । प्राणायामान्दशाष्टौचप्रायश्चित्तंयतिश्चरेत् ॥ ८ ॥ चाक्षुषेदशकुर्वीतवाच्येविंशतिमेवच । मानसेत्रिंशतिंचापिपा

 न् ॥ ९ ॥ यमः । कणपिण्याकतक्रंवाशाकमूलफलादिकम् । पक्वंवाप्यथवाऽपक्वंपचन्नश्नानतोयतिः ॥ १० ॥ आ

चरेत्त्रीणिकृच्छ्राणिप्राकृतान्येवशुद्धये । अभ्यासाद्बुद्धिपूर्वंहिपाकदोषान्नमुच्यते ॥ ११ ॥ देवलः । प्रस्कन्नरेतोदुर्बलत्वात्प्राणायामो

स्तु षोडश । रेतःसेकंक्वचिद्भिक्षुःकुर्यान्मोहात्तुकामतः । प्राजापत्यंत्रयंकृत्वाप्राणायामांस्तुशतंचरेत् ॥ १२ ॥ मनुः । त्र्यहंप्रात

स्त्र्यहंसायंत्र्यहमद्यादयाचितम् । त्र्यहंपरंतुनाश्नीयात्प्राजापत्योयमुच्यते ॥ १३ ॥ पराशरः । सायंतुद्वादशग्रासाःप्रातःपञ्चदश

स्मृताः । चतुर्विंशतिरयाच्याःपरंनिरशनंस्मृतम् ॥ १४ ॥ अशक्तंप्रत्यापस्तम्बआह स्म । सायंद्वाविंशतिग्रासाःप्रातःषड्विंशतिःस्मृ

ता. चतुर्विंशतिरयाच्याःपरेनिरशनास्त्रयः । कुक्कुटाण्डप्रमाणास्तुयथाचास्येविशेत्सुखम् ॥ १५ ॥ देवलः । स्वियंदृष्ट्वायदास्व

मेरेतःक्षरतिवैक्वचित् । सवासाऽऽप्लुत्यशुद्ध्यर्थंकुर्यात्षोडशसंयमान् ॥ १६ ॥ उपवासंयतिःकुर्यात्पुनःसुप्तेक्षरेद्यदि । प्राणाया

मैर्विशुद्धात्मा॥व जोजायतेपुन १७ ॥ दत्तात्रेयः । उपेत्यतुस्त्रियंकामात्प्रायश्चित्तंविधीयते । प्राणायामसमायुक्तःकृच्छ्रमब्दं 

समाचरेत् ॥ १८ ॥ तथैवचपुनःश्रान्तःकुर्यात्त्रतपनंव्रतम् । ततश्चरितनिर्देशात्कृच्छ्रस्यान्तेसमाहितः ॥ १९ ॥ पुनश्चाश्रममागत्य
चरेद्भिक्षुःसमाहितः । इच्छयायदितांपश्येत्प्राणायामास्तुषोडश ॥ २० ॥ विष्णुः । नैष्ठिकानांवनस्थानांयतीनामवकीर्णिनां ।
शुद्धानामपिलोकेस्मिन्प्रत्यापत्तिर्नविद्यते ॥ २१ ॥ आरूढोनैष्ठिकंधर्मंयदिप्रच्यवतेपुनः । प्रायश्चित्तंनपश्यामियेनशुद्ध्येत्सआत्म
हा ॥ २२ ॥ अत्रिः । वर्षाभेदंयतिःकुर्याद्यदिकश्चिदनापदि । प्राजापत्येनकृच्छ्रेणमुच्यतेनात्रसंशयः ॥ २३ ॥ स्थितियोग्यान्व
हून्ग्रामान्यदिवर्षासुलङ्घयेत् । प्रत्येकैकंचरेत्कृच्छ्रमेतत्पापात्प्रमुक्तये ॥ २४ ॥ वृद्धयाज्ञवल्क्यः । चौरैरुपद्रुतंदेशंदुर्भिक्षव्याधिपी
डितम् । चक्रेणाऽन्येनवाऽऽक्रान्तंवर्षास्वप्याशुसन्त्यजेत् ॥ २५ ॥ मुहूर्तमपिनासीतदेशेसोपद्रवेयतिः । उपद्रुतेतुमनसिसमा
धिर्नोपजायते ॥ २६ ॥ यत्तीर्थमनुसंप्राप्यचित्तमस्यप्रसीदति । तत्रतिष्ठेन्नरोविद्वान्मोक्षमार्गव्यवस्थितः ॥ २७ ॥ वृद्धशाता
तपः । निगृहीतेन्द्रियग्रामोयत्रयत्रनिवसेद्यतिः । तत्रतत्कुरुक्षेत्रंनैमिषंपुष्करंतथा ॥ २८ ॥ दत्तात्रेयः । चौरंमेढ्रप्रदेशेतु
कृत्वाकृच्छ्रंसमाचरेत् । प्राणायामशतंकृत्वातस्माद्भिक्षुर्विशुद्ध्यति ॥ २९ ॥ अत्रिः । नस्नानमाचरेद्भिक्षुःपुत्रादिनि—श्रु

पितृमातृक्षयंश्रुत्वास्नात्वाशुद्ध्यतिसाम्बरः। नकुर्यात्सूतकंभिक्षुःश्राद्धपिण्डोदकक्रियाः ॥ ३० ॥ वायुः। प्रातःस्नानंविनाकामाद्भु
क्त्वाचान्द्रायणंचरेत्। वहुभोज्येयतिर्भुक्त्वाकुर्यादेतद्व्रतंपुनः ॥ ३१ ॥ प्रयोगसारे। पात्रेतुपतितेभैक्षेएकभिक्षांकरोतियः। सकु
र्याच्छतमभ्यान्तःप्राणायामान्विशुद्धये ॥ ३२ ॥ जमदग्निः। अन्नमाधुकरींभिक्षांनैवेद्येतुविसर्जिते। परपाकंनगृह्णीयात्किञ्चि
दन्नमुपस्थितम् ॥ ३३ ॥ अत्रिः। भैक्षंचपरपाकान्नंसम्मिश्रंयोऽत्तिवैयतिः। त्रिरुपोषितोभूत्वाप्राणायामशतंचरेत् ॥ ३४ ॥ जम
दग्निः। अथवायद्गुरुर्ब्रूयात्तत्कार्य्यमविशङ्कया। निग्रहेऽनुग्रहेवापिगुरुःसर्वत्रकारणम् ॥ ३५ ॥ यमः। यदिपर्युषितंभैक्षमश्नीयाद्भि
क्षुःकथञ्चन। तदाचान्द्रायणंकुर्याद्यतिःशुद्ध्यर्थमात्मनः ॥ ३६ ॥ भिक्षुर्द्विभोजनंकुर्यात्कदाचिज्ज्ञानदुर्बलः। स्वस्थावस्थोयदात्वौ
स्यात्तदाचान्द्रायणंचरेत् ॥ ३७ ॥ अशक्तःप्राणरक्षार्थंपुनर्मूलफलादिकम्। भक्षयेन्नैवदुष्येतदुष्यतेदन्तधावनम् ॥ ३८ ॥ वृद्ध
याज्ञवल्क्यः। अष्टौतान्यव्रतघ्नानिआपोमूलंफलंपयः। हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधम् ॥ ३९ ॥ जावालः। एका
न्नंमधुमांसंचअन्नंविष्ठादिदूषितम्। हस्तकारंचनैवेद्यंप्रत्यक्षंलवणंतथा। एतान्भुक्त्वायतिर्मोहात्प्राजापत्यंसमाचरेत् ॥ ४० ॥

यत्यन्नंयतिपात्रस्थंयतिनाप्रेरितंचयत्। अन्नत्रयंनभोक्तव्यंभुक्त्वाचान्द्रायणंचरेत्॥ ४१॥ संन्यासंकुरुतेयस्तुश्राद्धंतस्यविधीयते।
तस्यान्नंनैवभोक्तव्यंभुक्त्वाचान्द्रायणंचरेत्॥ ४२॥ विश्वामित्रः। एकस्यान्नंत्र्यहंभुक्त्वानिरन्तरमनापदि। प्राणायामशतंकुर्याच्छु
द्ध्यर्थंयतिरात्मवान्॥ ४३॥ अत्रिः। ज्ञातीनांतुकुलेभिक्षुर्नभिक्षेतकथञ्चन। आचरेच्चयदाभिक्षांतदाचान्द्रायणंचरेत्॥ ४४॥
सगोत्रमसगोत्रंवायद्गृहेसूतकंभवेत्। नतावच्छुध्यतेभूमिर्यावन्नस्यादनिर्दशं। भिक्षांचेद्भिक्षुर्भिक्षेतभुक्त्वाचान्द्रायणंचरेत्॥ ४५॥
निषिद्धान्नंयदाश्नीयादनुज्ञायत्ननास्तिवै। अतिकृच्छ्रंतदाभिक्षुःकुर्याच्छुद्ध्यर्थमात्मनः॥ ४६॥ सक्तुपेषणगोदोहादन्नपाकादि
कालतः। ऊर्द्ध्वंयदिप्रतीक्षेतभिक्षार्थंभैक्षमाचरन्॥ ४७॥ द्वादशैवतदाकुर्यात्प्राणायामान्विशुद्धये। प्राणायामशतंकुर्याद्भुक्त्वा
शूद्रान्नमापदि॥ ४८॥ जमदग्निः। आहारग्रहणेरात्रौप्राणायामादशस्मृताः॥ जलग्रहणेरात्रौप्राणायामास्तथैवच॥
४९॥ भुक्तशेषंनकुर्वीतप्रमादात्कुरुतेयदि। प्रतिग्रासंतदाकुर्यात्त्रीँस्त्रीन्प्राणायामान्यतिः॥ ५०॥ देवलः। पतितान्नंसकृ
द्भुक्त्वाप्रायश्चित्तीभवेद्यतिः। तप्तकृच्छ्रंत्रयंकृत्वाशुद्ध्यतेनात्रसंशयः॥ ५१॥ यमः। ताम्बूलाऽभ्यञ्जनंचैवकांस्यपात्रेतुभोजनम्।

सा० कृत्वाचोपवसेद्भिक्षुःस्रग्गन्धादिचभूषणम् ॥५२॥ उपानहौविनाभिक्षुःकृत्वाभिक्षाटनादिकम्। मार्गेमूत्रसमाकीर्णेसम्यक्स्नाने
६ नशुद्ध्यति ॥५३॥ स्नानेनमुच्यतेभिक्षुस्तपसास्वर्गमवाप्नुयात्। नरकंविषयासक्ताश्चयेमार्गास्तपस्विनाम् ॥५४॥ जमदग्निः।
उद्धृत्यवामहस्तेनभाजनंयोऽन्नमत्तिवै। गृध्रोच्छिष्टंचविज्ञेयंभुक्त्वाचान्द्रायणंचरेत् ॥५५॥ यमः। उद्धृत्यवामहस्तेनयःपिबेद्ब्रा
ह्मणोजलम्। सुरापानेनतत्तुल्यंमनुःस्वायम्भुवोऽब्रवीत् ॥५६॥ शौचशेषंपीतशेषंपादशेषंतथैवच। मदतुल्यंतुतत्तोयंपर्युक्षक
रणंविना ॥५७॥ जमदग्निः। विनाङ्गुष्ठेननाश्नीयान्नलिहेज्जिह्वयाकरम्। अश्नन्यदिलिहेद्धस्तंतदाचान्द्रायणंचरेत् ॥
५८॥ भुञ्जानस्ययदाभिक्षोःकदाचिच्छ्रवतेगुदम्। अन्नञ्चास्यगतंत्यक्त्वाकृत्वाशौचंसमाहितः ॥५९॥ स्नानंकृत्वायथान्यायं
त्रिंशत्प्राणायामांश्चरेत्। अहोरात्रोपोषितोभूत्वापञ्चगव्यंपिबेत्ततः ॥६०॥ पञ्चगव्यपानमन्त्रश्चान्यैर्निर्दिष्टः। यत्त्वगस्थिगतं
पापंशरीरेपूर्वसञ्चितं। तन्मेपापञ्चशोकञ्चपञ्चगव्याःपुनन्तुमाम् ॥६१॥ विश्वामित्रः। अज्ञानादुक्तमेवैतत्प्रायश्चित्तंविधीयते। ६८
अभ्यासादधिकंकिञ्चिद्वर्द्धतेदिनसंख्यया ॥६२॥ विष्णुपुराणे। कृतेपापेऽनुतापोवैयस्यपुंसःप्रजायते। प्रायश्चित्तंतुतत्तस्यह

रिसंस्मरणंपरम् ॥ ६३ ॥ तस्मादहर्निशंविष्णुंसंस्मरेत्पुरुषोमुने । नयातिनरकंशुद्धःसंक्षीणाऽखिलपातकः ॥ ६४ ॥ स्कान्दपु
राणे । अभक्ष्यभक्षणात्पापमगम्यगमनादिजम् । नश्यतेनात्रसन्देहोगोविन्दस्यप्रकीर्त्तनात् ॥ ६५ ॥ तन्नास्तिकर्मजंलोकेवाग्जं
मानसमेववा । यत्तुनक्षीयतेपापंकलौगोविन्दकीर्त्तनात् ॥ ६६ ॥ आत्मबो० । जपाज्ज्ञानात्तथाध्यानान्नान्यच्छिक्षोस्तुशोधनम् ।
तस्मात्तानिसदाकुर्याद्यतिःशुद्ध्यर्थमात्मनः ॥ ६७ ॥ ध्यानेनसदृशंनास्तिशोधनंपापकर्मणाम् । श्वपाकेष्वपिभुञ्जानोध्यायीनैव
तुलिप्यते ॥ ६८ ॥ इतिप्रायश्चित्तविधिः । वाक्यसंग्रहवृद्धा० । किम्बहुक्तेनेहसङ्क्षेपादिदमुच्यते । त्यागोविषयमात्रस्यक
र्त्तव्योऽखिलभिक्षुभिः ॥ ६९ ॥ सन्न्यासाश्रममासाद्ययोविषयेषुसज्जते । स्वगुणख्यातिसञ्जीवीसभिक्षुःसर्वतोधमः ॥ ७० ॥ स्वस्त्रे
योऽर्थंकृताऽऽयासःस्वधर्माणाञ्चगूहकः । परदोषाऽप्रवादीचसभिक्षुस्तूत्तमःस्मृतः ॥ ७१ ॥ सर्वारम्भपरित्यागीसदैवात्मसुख
श्रयः । ब्रह्माभ्यासपरोनित्यंसभिक्षुर्भिक्षुरुच्यते ॥ ७२ ॥ भिक्षान्नमात्रसम्भोजीकन्थाकौपीनसङ्ग्रही । श्रवणादिरतोयस्तुस
भिक्षुर्मोक्षमाप्नुयात् ॥ ७३ ॥ तुष्टयोभिक्षुणाहेयामोक्षाध्वप्रतिबन्धिकाः । अन्यथान्यासतुष्ट्यायंमोक्षमार्गात्पतेद्यतिः ॥ ७४ ॥

मु० सा०
उपादानाभिधायासान्यासतुष्टिर्निगद्यते। न्यासलिङ्गेनबोधःस्यात्तेनमोक्षोपिसम्भवेत् ॥ ७५ ॥ अतोध्यानविरागाभ्यांजपा
७ दिभिश्चकिंमम। इतितुष्टिःसदाहेयातथान्याश्चाष्टतुष्टयः ॥ ७६ ॥ ताःसांख्यतत्त्वकौमुद्यामीश्वरकृष्णेनदर्शिताः। तद्वाक्यंसं
लिखामीहनवतुष्टिप्रदर्शकम् ॥ ७७ ॥ ईश्वरकृष्णवा०। अध्यात्मिकाश्चतस्रःप्रकृत्युपादानकालभागाख्याः। वाह्याविषयो
परमात्पञ्चनवतुष्टयोऽभिमताः ॥ ७८ ॥ याज्ञवल्क्यः। नाश्रमःकारणंधर्मेक्रियमाणोभवेद्धिसः। अतोयदात्मनोऽपथ्यंपरेषांन
समाचरेत् ॥ ७९ ॥ वाक्यसं०। अथविद्वद्यतेर्धर्मायैर्वाक्यैःसंप्रदर्शिताः। सङ्क्षेपात्तान्यपीहाहंसंगृह्णामिप्रसङ्गतः ॥ ८० ॥
ब्रह्मोपनिषद्वा०। अग्नेरिवशिखानान्यायस्यज्ञानमयीशिखा। सशिखीत्युच्यतेविद्वानितरेकेशधारिणः ॥ ८१ ॥ ज्ञानशिखि
नोज्ञाननिष्ठाज्ञानयज्ञोपवीतिनः। ज्ञानमेवपरंतेषांपवित्रंज्ञानमुत्तमम् ॥ ८२ ॥ परमहंसोपनिषद्वा०। सर्वान्कामान्परित्य
ज्याद्वैतेचपरमास्थितिः। ज्ञानदण्डोधृतोयेनएकदण्डीसउच्यते ॥ ८३ ॥ ब्रह्मोपनिषद्वा०। यदाऽऽत्माप्रज्ञयाऽऽत्मानंसन्धत्ते ७
परमात्मनि। तेनसन्ध्याध्यानमेवतस्मात्सन्ध्याभिवन्दनम् ॥ ८४ ॥ निरुदकाध्यानसन्ध्यावाक्कायक्लेशवर्जिता। सन्धिनीसर्वभू

तानांसासन्ध्याह्येकदण्डिनाम् ॥ ८५ ॥ श्रुतयः। आत्मानमात्मनासाक्षाद्ब्रह्मबुद्ध्यासुनिश्चलम्। देहजात्यादिसम्बन्धान्वर्णाश्र
मसमन्वितान् ॥ ८६ ॥ वेदशास्त्रपुराणानिपादपांशुमिवत्यजेत्। एकाकीनिःस्पृहस्तिष्ठेन्नहिकेनसहालपेत्। दद्यान्नारायणे
त्येवंप्रतिवाक्यंसदायतिः ॥ ८७ ॥ मुनिःकौपीनवासास्यान्नग्नोवाध्यानतत्परः। अध्यात्मरतिरासीनोनिरपेक्षोनिराशिषः।
आत्मनैवसहायेनसुखार्थीविचरेदिह ॥ ८८ ॥ सन्दिग्धःसर्वभूतानांवर्णाश्रमविवर्जितः। अन्धवज्जडवच्चापिमूकवच्चमहीं
चरेत् ॥ ८९ ॥ देवाग्न्यागारेतरुमूलेगुहायां वसेदसङ्गोऽलक्षितशीलवृत्तः। निरिन्धनज्योतिरिवोपशान्तो नचोद्विजेदु
द्विजेच्चकुत्र ॥ त्यक्तैषणोह्यनृणस्तांविदित्वा मौनीवसेदाश्रमेयत्रकुत्र ॥ ९० ॥ भारते। कपालंवृक्षमूलानिकुचैलमसहायता।
उपेक्षासर्वभूतानामेतावद्भिक्षुलक्षणं ॥ ९१ ॥ अशेषमोहःसमलोष्टकाञ्चनः प्रहीणकोशोगतसन्धिविग्रहः। अपेतनिन्दा
स्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेषभिक्षुकः ॥ ९२ ॥ अशिल्पजीवीगुणवांश्चनित्यं जितेन्द्रियःसर्वतोविप्रयुक्तः। अनो
कशायीलघुरल्पप्रचार श्चरन्देशानेकचरःसभिक्षुकः ॥ ९३ ॥ लाभंसाधारणंनेच्छेन्नाभिभुञ्जीतपूजितः। अभिपूजितलाभंहि

जुगुप्सेतैवतादृशः ॥ ९४ ॥ शून्यागारंवृक्षमूलमारण्यमथवागुहाम्। अज्ञातचर्यांगत्वान्यांततोन्यत्रैवसंविशेत् ॥ ९५ ॥ याज्ञव
ल्क्यः। अकार्यकारिणांदानंवेगोनद्याश्चशुद्धिकृत्। शोध्यस्यमृच्चतोयञ्चसन्न्यासोऽर्थद्विजन्मनाम् ॥ ९६ ॥ अङ्गिरस०। षष्टि
कुलान्यतीतानिषष्टिआगामिकानिच। कुलान्युद्धरतेप्राज्ञःसन्न्यस्तमितियोवदेत् ॥ ९७ ॥ वाक्यसं०। एवंविद्वद्यतेर्धर्माःसङ्क्षे
पेणेहदर्शिताः। तेचसंध्याःप्रयत्नेनान्यैरपियतिभिःसदा ॥ ९८ ॥ विविदिषुस्तुसन्न्यासीतत्त्वज्ञंवेदपारगं। उपेयाद्ब्रह्मबोधाया
चार्यंशुश्रूषयान्वितः ॥ ९९ ॥ ननुब्रह्मविदाचार्यंविनाप्राक्श्रुतशास्त्रतः। तर्केणवात्मबोधःस्यात्तस्मैयत्नःपुनर्वृथा ॥ ५०० ॥ नैवं
ब्रह्मविदाचार्यंविनाबोधोनसम्भवेत्। प्राक्श्रुततर्कशास्त्रेणह्याचार्यवानितिश्रुतेः ॥ १ ॥ तर्कस्यवेदबाह्यस्यनास्त्यात्मज्ञानहेतु
ता। नैषातर्केणचाप्याधीरितिश्रुत्यानिषेधनात् ॥ २ ॥ तज्ज्ञानार्थमितिश्रुत्यातद्विद्धीतिस्मृतेस्तथा। गुरूपगमनंकार्यंब्रह्मज्ञाना
यभिक्षुणा ॥ ३ ॥ अमानित्वादिभिर्युक्तस्तथाऽद्वेष्टादिभिर्यतिः। शृणुयात्तत्त्वमस्यादिवाक्यानिस्वगुरोर्मुखात् ॥ ४ ॥ ज्ञानायश्रव
णादीनिकार्याणीत्यब्रवीच्छ्रुतिः। तथातल्लक्षणादीन्याचार्यैरुक्तानिवैस्फुटम् ॥ ५ ॥ तथाचश्रुतिः। श्रोतव्यःश्रुतिवाक्येभ्योमन्तव्य

श्चोपपत्तिभिः। श्रुत्वाचसततंध्यायेदेतेदर्शनहेतवः॥ ६॥ सर्वज्ञमुनिवा०। शब्दशक्तिविषयंनिरूपणं युक्तितःश्रवणमुच्यते वुधैः। वस्तुतत्त्वविषयंनिरूपणं युक्तितोमननमित्युदीर्यते॥ ७॥ चेतसस्तुचितिमात्रशेषता ध्यानमित्यभिवदन्तिवैदिकाः। अन्तरङ्गमिदमीरितं तत्कुरुष्वपरमात्मवुद्धये॥ ८॥ आप्तवा०। श्रुतेःशतगुणंविद्यान्मननंमननादपि। निदिध्यासोलक्ष गुणोथानन्तंनिर्विकल्पकम्॥ ९॥ वार्त्तिककृद्वा०। श्रवणादिक्रियातावत्कर्त्तव्येहप्रयत्नतः। यावद्यथोक्तविज्ञानमाविर्भवतित त्त्वतः॥॥ १०॥ नियमःपरिसंख्यावाविध्यर्थोपिभवेद्यतः। अनात्माऽदर्शनेनैवपरात्मानमुपास्महे॥ ११॥ वाक्यसं०। अज्ञानं वन्धहेतुर्हिविज्ञानंवन्धनाशकम्। तस्माद्ब्रह्मात्मविज्ञप्तैरकर्त्तव्यंश्रवणादिकम्॥ १२॥ व्यासः। गुरुमूलाःक्रियाःसर्वाभुक्तिमु क्तिफलप्रदाः। तस्मात्सेव्योगुरुर्नित्यंयुक्तार्थस्तुसमाहितैः॥ १३॥ श्रद्धयापरयायुक्तःसदाद्वादशसन्ध्ययोः। दण्डप्रणामान्कुर्वी तदेवतागुरुसन्निधौ॥ १४॥ गुरोर्नैवाऽप्रियंकुर्यात्पण्डितेऽपण्डितेपिवा। नाभासयेच्चतद्वाक्यंनावमानंसमाचरेत्॥ १५॥ गुरो श्चक्षुर्विषयेनयथेष्टासनोभवेत्। नकुर्यान्नियमारम्भमनिवेद्यस्वकंगुरुम्। छायाभूतोऽपरित्यागीनित्यमेववसेद्गुरौ॥ १६॥ मनुः।

नदेशोनचकालोस्तिनहिंसागुरुकर्मणि। सर्वचैवानुकूलःस्यादेतावान्धर्मसंग्रहः। नोदाहरेदस्यनामपारोक्षमपिकेवलम्॥ १७॥
गुरोर्यत्रपरिवादोनिन्दावापिप्रवर्त्तते। कर्णौतत्रपिधातव्यौगन्तव्यंवाततोऽन्यतः॥ १८॥ संप्रदायविदः। वेदान्तश्रवणारम्भे
प्रणामाद्वादशस्मृताः। गुरोर्वैयथावदन्तेतुषट्प्रणामाःप्रकीर्त्तिताः॥ १९॥ उरसाशिरसादृष्ट्यामनसाश्रद्धयाऽपिच। पद्भ्यांक
राभ्यांकर्णाभ्यांप्रणामोष्टाङ्गउच्यते॥ २०॥ अष्टाक्षरेणमन्त्रेणयतयोदिनमस्कृताः। स्मृतनारायणाश्चान्तिनराणांपापपञ्जरम्॥
२१॥ वाक्यसं०। एवंगुरुमुपागम्यततोज्ञानमवाप्यच। ब्रह्मात्माऽज्ञाननाशेनब्रह्मैवभवतिस्वयम्॥ २२॥ नन्वेवंब्रह्मबोधोऽस्तु
शिष्यस्यगुरुवाक्यतः। अधिकारीतथाप्यस्यजीवोन्योवेतिसम्वद॥ २३॥ शृणुत्वंब्रह्मबोधस्याधिकारीब्रह्मनापरः। यतोऽज्ञा
नेनजीवत्वंब्रह्मणस्वेप्रकल्पितम्॥ २४॥ राधेयतेवकौन्तेयेसिंहेचाप्यजतायथा। राजपुत्रेचभिल्लत्वंतथाब्रह्मणिजीवता॥
२५॥ ब्रह्मैववस्तुतोमुक्तंज्ञेयत्वंप्रतिपद्यते। जीवत्वंचाप्यबोधेनातोऽर्हतितन्मुमुक्षुताम्॥ २६॥ ननुविद्याधिकारित्वंब्रह्मणि
नार्हतीतिचेत्। किंनैव्यस्तेजगत्सर्वमज्ञानात्तत्रकल्पितम्॥ २७॥ अविद्योपाधिकन्त्वेतद्वेद्यञ्चनिरुपाधिकम्। ब्रह्मातःकर्म

कर्तृत्वमेकस्याचनदूषणम् ॥ २८ ॥ अतोऽविद्याविनाशायगुरुतोज्ञानलब्धये। विविदिषुर्गुरुं ब्रूयाद्गुरोध्यापयमामिति॥ २९ ॥ सचेदाहपृच्छत्वंमांतदापृच्छेत्तुभक्तितः। लिङ्गयऽलिङ्गयथवान्यासीयोनोक्तसाधनान्वितः ॥ ३० ॥ एवंरामप्रसादेनप्रकरणंचतुर्थकम्। समासंयतिधर्माणांविस्तरेणनिरूपकम् ॥ ५३१ ॥ १३२८ ॥ इतिश्रीमुमुक्षुसर्वस्वसारसंग्रहाख्येनिबन्धेसन्न्यासप्रकरणंचतुर्थंसंपूर्णम् ॥

हरिरोन्तत्सत्। श्रीगणेशायनमः। यतउत्पद्यतेविश्वंयत्सत्तयाचसंस्थितम्। यस्मिंश्चप्रलयंयातितंश्रीरामंनमाम्यहम् ॥ १ ॥ येषांवाक्योपदेशेनाऽज्ञानंविगलितंमम। तान्परब्रह्मरूपान्वैनौमिस्वसद्गुरूनपि ॥ २ ॥ चतुर्भिःसाधनैर्युक्तःकश्चिन्मुमुक्षुरनायतिः। प्रणम्यस्वगुरुंभक्त्यापृष्टवांस्तंमुमुक्षया ॥ ३ ॥ भोभगवन्नहंभीतोजन्मादिदुःखसागरात्। अतस्तत्तरणोपायंसंक्षिप्यकृपयावद ॥ ४ ॥ सचतद्वचनंश्रुत्वागुरुराहदयानिधिः। माभैष्टसोम्यदुःखात्त्वंत्वयापृष्टंवदाम्यहम् ॥ ५ ॥ तत्त्वमस्यादिवाक्योत्थमात्मब्रह्मैक्यगोचरम्। यज्ज्ञानंतत्तुदुःखाब्धेःसन्तरणस्यसाधनम् ॥ ६ ॥ ऐक्यज्ञानंविनानान्यदस्त्यात्माज्ञाननाशकम्।

सा० तन्नाशश्चविनानास्तिजन्मादिदुःखसङ्क्षयः ॥ ७ ॥ ऋतेज्ञानान्नमोक्षोक्तिनान्यःपन्थाविमुक्तये । ज्ञात्वातंमृत्युमत्येतीत्याद्याहि
श्रुतयोजगुः ॥ ८ ॥ श्रुतिः । यदाचर्मवदाकाशंवेष्टयिष्यन्तिमानवाः । तदादेवमविज्ञायदुःखस्यान्तोभविष्यति ॥ ९ ॥ वाक्य
संग्रहकृद्वाक्यानि । तस्मात्त्वीकुरुहेसौम्यजन्मादिदुःखसागरात् । जीवब्रह्मैक्यविज्ञानंप्लवंसन्तरणायवै ॥ १० ॥ कोजीवःकिं
परंब्रह्मचैक्यंस्वामिंस्तयोःकथम् । कथञ्चतत्त्वमस्यादिवाक्यंतत्प्रतिपादयेत् ॥ ११ ॥ शृणुष्वसावधानःसन्नान्योजीवस्त्वमेव
हि । अहमेवास्मिकःस्वामिंस्त्वंब्रह्मासीतिनिश्चिनु ॥ १२ ॥ वेदवाक्यानिभाषन्तेवस्तुतेब्रह्मरूपताम् । दुःखशान्त्यैचसन्त्यागंशृणु
तानिवदामिते ॥ १३ ॥ श्रुतयः । एकमाद्यन्तरहितंचिन्मात्रममलंततं । खादप्यतितरांसूक्ष्मंतद्ब्रह्मासिनसंशयः ॥ १४ ॥
चिदिहास्तीतिचिन्मात्रमिदंचिन्मयमेवच । चित्त्वंचिदहमितिचलोकाश्चिदितिविभावय ॥ १५ ॥ यत्परंब्रह्मसर्वात्माविश्व
स्यायतनंमहत् । सूक्ष्मात्सूक्ष्मतरंनित्यंतत्त्वमेवत्वमेवतत् ॥ १६ ॥ आदिमध्यावसानेषुदुःखंसर्वमिदंयतः । तस्मात्सर्वंपरित्य
ज्यतत्त्वनिष्ठोभवानघ ॥ १७ ॥ सर्वव्यापारमुत्सृज्यअहंब्रह्मेतिभावय । अहंब्रह्मेतिनिश्चित्यअहंभावंपरित्यज ॥ १८ ॥ निद्रा

यालोकवार्त्तायाःशब्दादेरात्मविस्मृतेः। क्वचिन्नावसरंदत्वाचिन्तयात्मानमात्मनि ॥ १९ ॥ वाक्यसं०। भगवन्सम्यगध्यापिप
दार्थान्नैववेद्म्यहम्। तत्त्वमेवेतिवाक्यार्थंजानीयांतुकथंवद ॥ २० ॥ सत्यंयदात्थवत्सत्वंवाक्यार्थप्रमिताविह। हेतुःपदार्थबोधो
स्तिपदार्थान्विद्ध्यहंब्रुवे ॥ २१ ॥ त्वंपदार्थस्त्वहंप्रत्यक्तत्पदार्थोमहेश्वरः। असीतिचतयोरैक्यमेवंज्ञेयंतुतच्चिकम् ॥ २२ ॥ यो
देहेन्द्रियहृत्साक्षीसच्चिदानन्दलक्षणः। तंनित्यानन्दमात्मानंजानीषेनकथंवद ॥ २३ ॥ बाह्येह्यात्मन्यहंभावंत्यक्त्वातथान्तरा
त्मनि। कारणाङ्गेचतंत्यक्त्वातेषांसाक्षिविद्धिसाक्षिणम् ॥ २४ ॥ अन्नमयाभिधःकोशोदेहोरूपादिमत्त्वतः। भौतिकत्वाच्चनात्मा
यंघटादिवत्सदैवहि ॥ २५ ॥ उपदेशसहस्र्यां। पार्थिवःकठिनोधातुर्द्रवोदेहेस्मृतोम्मयः। पक्तिचेष्टावकाशाःस्युर्वह्निवा
य्वम्बरोद्भवाः ॥ २६ ॥ वाक्यसं०। इतिभाष्यकृताचोक्तादेहस्यभूतकार्यता। तस्मादनात्मकेदेहेत्यजत्वमात्मभावनाम् ॥ २७ ॥
अनात्मायदिदेहोयंरूपवत्त्वादिहेतुभिः। तर्हिलिङ्गिन्नमात्मानंस्पष्टंस्वामिन्समीरय ॥ २८ ॥ देहद्रष्टासदाभिन्नोघटद्रष्टेव
देहतः। द्रष्टृत्वात्त्वंस्वमात्मानंदेहाद्भिन्नंविनिश्चिनु ॥ २९ ॥ स्वाभिन्नद्रष्टृकोदेहोदृश्यत्वाद्धिघटादिवत्। देहद्रष्टारमेवंवा

सा० तन्नाशञ्च विनानास्तिजन्मादिदुःखसङ्क्षयः ॥ ७ ॥ ऋतेज्ञानान्नमोक्षोक्तिनान्यःपन्थाविमुक्तये। ज्ञात्वातंमृत्युमत्येतीत्याद्याहि
६ श्रुतयोजगुः ॥ ८ ॥ श्रुतिः। यदाचर्मवदाकाशंवेष्टयिष्यन्तिमानवाः। तदादेवमविज्ञायदुःखस्यान्तोभविष्यति ॥ ९ ॥ वाक्य
संग्रहकृद्वाक्यानि। तस्मात्स्वीकुरुहेसौम्यजन्मादिदुःखसागरात्। जीवब्रह्मैक्यविज्ञानंप्लवंसन्तरणायवै ॥ १० ॥ कोजीवःकिं
परंब्रह्मचैक्यंस्वामिंस्तयोःकथम्। कथञ्चतत्त्वमस्यादिवाक्यंतत्प्रतिपादयेत् ॥ ११ ॥ शृणुष्वसावधानःसन्नान्योजीवस्त्वमेव
हि। अहमेवास्मिकःस्वामिंस्त्वंब्रह्मासीतिनिश्चिनु ॥ १२ ॥ वेदवाक्यानिभाषन्तेवत्सतेब्रह्मरूपताम्। दुःखशान्त्यैचसन्त्यागंशृणु
तानिवदामिते ॥ १३ ॥ श्रुतयः। एकमाद्यन्तरहितंचिन्मात्रममलंततं। खादप्यतितरांसूक्ष्मंतद्ब्रह्मासिनसंशयः ॥ १४ ॥
चिदिहास्तीतिचिन्मात्रमिदंचिन्मयमेवच। चित्त्वंचिदहमितिचलोकाश्चिदितिविभावय ॥ १५ ॥ यत्परंब्रह्मसर्वात्माविश्व
स्यायतनंमहत्। सूक्ष्मात्सूक्ष्मतरंनित्यंतत्त्वमेवत्वमेवतत् ॥ १६ ॥ आदिमध्यावसानेषुदुःखंसर्वमिदंयतः। तस्मात्सर्वंपरित्य
ज्यतत्त्वनिष्ठोभवानघ ॥ १७ ॥ सर्वव्यापारमुत्सृज्यअहंब्रह्मेतिभावय। अहंब्रह्मेतिनिश्चित्यअहंभावंपरित्यज ॥ १८ ॥ निद्रा ६

यालोकवार्त्तायाःशब्दादेरात्मविस्मृतेः। क्वचिन्नावसरंदत्वाचिन्तयात्मानमात्मनि ॥ १९ ॥ वाक्यसं०। भगवन्सम्यगज्ञ्यापिप
दार्थान्नैववेद्म्यहम्। तत्त्वमेवेतिवाक्यार्थंजानीयांतुकथंवद ॥ २० ॥ सत्यंयदात्थवत्सत्वंवाक्यार्थप्रमिताविह। हेतुःपदार्थबोधो
स्तिपदार्थान्विद्ध्यहंब्रुवे ॥ २१ ॥ त्वंपदार्थस्त्वहंप्रत्यक्तत्पदार्थोमहेश्वरः। असीतिचतयोरैक्यमेवंज्ञेयंतुतत्त्विकम् ॥ २२ ॥ यो
देहेन्द्रियहृत्साक्षीसच्चिदानन्दलक्षणः। तंनित्यानन्दमात्मानंजानीषेनकथंवद ॥ २३ ॥ बाह्येह्यात्मन्यहंभावंत्यक्त्वातथान्तरा
त्मनि। कारणाऽङ्गेचतंत्यक्त्वातेषांस्त्वंविद्धिसाक्षिणम् ॥ २४ ॥ अन्नमयाऽभिधःकोशोदेहोरूपादिमत्त्वतः। भौतिकत्वाच्चनात्मा
यंघटादिवत्सदैवहि ॥ २५ ॥ उपदेशसहस्त्र्यां। पार्थिवःकठिनोधातुर्द्रवोदेहेस्मृतोम्मयः। पक्तिचेष्टाऽवकाशाःस्युर्वह्निवा
य्वम्बरोद्भवाः ॥ २६ ॥ वाक्यसं०। इतिभाष्यकृताचोक्तादेहस्यभूतकार्यता। तस्मादनात्मकेदेहेत्यजत्वमात्मभावनाम् ॥ २७ ॥
अनात्मायदिदेहोयंरूपवत्त्वादिहेतुभिः। तर्हित्वंभिन्नमात्मानंस्पष्टंस्वामिन्समीरय ॥ २८ ॥ देहद्रष्टासदाभिन्नोघटद्रष्टेव
देहतः। द्रष्टृत्वात्त्वंस्वमात्मानंदेहाद्भिन्नंविनिश्चिनु ॥ २९ ॥ स्वभिन्नद्रष्टृकोदेहोदृश्यत्वाद्धिघटादिवत्। देहद्रष्टारमेवंत्वा

स्वात्मानमवधारय ॥ ३० ॥ किन्त्वात्माभास्यदेहाद्वै भासकत्वाद्विभिद्यते । काष्ठादेर्हि यथैवाग्निस्तथाचायंततस्तथा ॥ ३१ ॥ चेत
नाऽधीनचेष्टावान्देहोनात्मारथादिवत् । जडत्वात्स्वंततस्तस्यप्रेरकमवधारय ॥ ३२ ॥ एवमन्नमयाद्भिन्नंज्ञात्वात्मानंहिचिद्घ
नम् । देहेस्वात्ममतिंत्यक्त्वाप्राणमयेपितांत्यज ॥ ३३ ॥ भौतिकत्वात्तथाप्राणोऽनात्माजडतयापिच । सुप्तौयतोनजानातिचौ
रादीन्सञ्ज्वलन्नपि ॥ ३४ ॥ स्पर्शवत्त्वात्तथाप्राणोनात्माव्यजनवातवत् । करणत्वाच्चनात्माऽस्यप्राणेनेतिश्रुतेस्तुतत् ॥ ३५ ॥
नप्राणेननापानेनमर्त्योजीवतिकश्चन । इत्युक्त्वाकाठकश्रुत्याप्राणस्याऽनात्मतातथा ॥ ३६ ॥ क्षुत्पिपासावतःप्राणात्तथाऽपाना
दितोजडात् । भिन्नंप्रेरकमाधारंचैषांस्वमवधारय ॥ ३७ ॥ वागादयोप्यऽनात्मानःकरणत्वात्कुठारवत् । यत्सान्निध्याद्विचेष्ट
न्तेसोहंचिदितिनिश्चिनु ॥ ३८ ॥ प्राणमयस्यकोशस्यवुद्ध्वैवंस्वंहिसाक्षिणम् । मनोमयाख्यकोशेपित्यजसौम्यात्मभावनाम् ॥ ३९ ॥
मनोमयोपिनैवात्माकरणत्वात्कुठारवत् । भौतिकत्वाच्चनात्मासदृश्यत्वाच्चप्रदीपवत् ॥ ४० ॥ चक्षुर्भवतिनैवात्माकरणत्वात्प्र
दीपवत् । रूपंयथैवदीपेनलभ्यतेचक्षुषातथा ॥ ४१ ॥ श्रोत्रादिष्वेवमेवोह्यमनात्मत्वंत्वयासदा । मत्प्रत्ययास्पदत्वाद्वैभौतिक

त्वाच्चदाचवत् ॥ ४२ ॥ श्रोत्रादीनिमनश्चैवंनैवात्मेतिविचारयन्। तेषांसाक्षिणमात्मानंसदात्वमवधारय ॥ ४३ ॥ विकृतिम
ननुप्राणःसन्नऽयस्मात्त्वक्षुधः। चालयेन्मनआदीनिसोहंचिदितिनिश्चिनु ॥ ४४ ॥ मनोमयस्यकोशस्यनात्मत्वैवंस्वंहिसाक्षिणम्।
विज्ञानमयकोशेपिजहिसौम्यात्मभावनाम् ॥ ४५ ॥ बुद्धिरपिचनैवात्माद्दृश्यत्वात्करणत्वतः। तथायथाप्रदीपादिस्तथाचेयंततत
स्तथा ॥ ४६ ॥ विज्ञानमयशब्देनश्रुत्याकर्त्ताप्रकीर्त्तितः। विज्ञानंतनुतेयज्ञमित्येवमाद्ययास्फुटम् ॥ ४७ ॥ भोक्ताऽऽनन्दमय
स्तद्वत्कार्यात्मामयटेरितः। कर्त्ताभोक्ताचनैवत्वंकिन्त्वानन्दोसिकेवलः ॥ ४८ ॥ विज्ञानमयकोशस्यबुद्धेवंत्वमनात्मताम्। सौम्या
नन्दमयेकोशेतथात्यजात्मभावनाम् ॥ ४९ ॥ नात्मानन्दमयःकोशःशिरःपक्षादिमत्त्वतः। यथैवान्नमयःकोशस्तथाचायंततस्तथा
॥ ५० ॥ सौम्यानन्दस्त्वमेवासिकेवलोनन्तचिद्घनः। द्रष्टैवपञ्चकोशानांनत्वंकोशाःकदाचन ॥ ५१ ॥ नत्वंहन्नेन्द्रियाणित्वंन
जाग्रदादिमांस्तथा। अवस्थात्रयसाक्षीयःसोहमित्यवधारय ॥ ५२ ॥ देहादिभिःसहाऽध्यासाद्भोक्तृत्वंतेनतुस्वतः। आत्मेन्द्रि
य मनोयुक्तंभोक्तेत्याहुरितिश्रुतेः ॥ ५३ ॥ भगवन्जाग्रदादीनांलक्षणंत्वंसमीरय। तद्धर्मिणश्चतेषांमांजानीयांयेनसाक्षिणम् ॥

५४ ॥ जाग्रतोलक्षणंसौम्यतथातद्धर्मिणंशृणु । श्रुत्वातयोश्चयोद्रष्टासोहमित्यवधारय ॥ ५५ ॥ धीन्द्रियैर्विषयज्ञानंसत्वेनचतथै
वयत् । तत्तद्देवप्रसादेनबुधैर्जाग्रत्तदीरितम् ॥ ५६ ॥ ससत्वेन्द्रियसङ्घातोजाग्रद्धर्मीतिकथ्यते । नत्वंसत्वेन्द्रियग्रामस्तत्साक्ष्य
सिनसंशय: ॥ ५७ ॥ एवंसौम्यनतेधर्मोजाग्रदपितुचेतस: । सेन्द्रियस्यैवतद्धर्मस्त्वंतत्साक्ष्येवकेवल: ॥ ५८ ॥ यथाजाग्रन्नतेधर्म
स्तथास्वप्नोपिनैवते । त्वंतुस्वप्नेस्वयंज्योतिरत्रायमितिचश्रुते: ॥ ५९ ॥ वाह्येन्द्रियोपसंहारेजाग्रत्संस्कारजोहिय: । वोध:सवि
षय:सोऽसौस्वप्नोभाष्यकृतेरित: ॥ ६० ॥ यथास्वप्नोमनोधर्मोधर्म:सुप्तिस्तथाधिय: । वुद्धे:कारणरूपेणाऽवस्थानंसुप्तिरीरिता ॥
६१ ॥ जाग्रत्स्वप्नसुषुप्तीनांतथादेहत्रयस्यच । विश्वाद्याह्यभिमन्तारस्तद्दृष्टात्वंह्यलुप्तदृक् ॥ ६२ ॥ स्वप्नोजागरणेनास्तिजाग्रत्स्व
प्नेतथैवन । सुप्तौतद्द्वयंनास्तिसुप्तिश्चापितयोर्नहि ॥ ६३ ॥ अतस्तत्त्रयंमिथ्यागुणत्रयसमुद्भवम् । तासांयोनिर्गुण:साक्षीसो
हमित्यवधारय ॥ ६४ ॥ जाग्रत्स्वप्नसुषुप्तीनांभावाभावौधियांतथा । जागरस्वप्नयोर्वेत्तिमनसश्चगमागमौ । सुप्तौचतल्लयंवेत्ति
सो० ॥ ६५ ॥ घटप्रकाशकोदीपोयथानघटधर्मवान् । सुप्तादिभासकस्तद्वन्नात्मासुप्त्यादिधर्मवान् ॥ ६६ ॥ अदेहत्वाच्चजन्मा

द्याःषड्विकारानतेतथा। गोत्रवर्णाऽऽश्रमाद्याश्चनतेधर्माहिसौम्यभो ॥ ६७ ॥ क्षुत्पिपासेनतेधर्माःशोकमोहौतथानते। अप्रा
णाह्यमनाःशुभ्रइतिश्रुत्यनुशासनात् ॥ ६८ ॥ दारपुत्रादयोभावायदर्थत्वेननुःप्रियाः। सर्वेभ्योतिप्रियोह्यात्मासोहमित्यवधारय
॥ ६९ ॥ परप्रेमास्पदत्वेनमानभूवमहंसदा। भूयासमितियोवेत्तिसोहमि० ॥ ७० ॥ भगवन्सुखरूपश्चेदात्माऽयंसंसरेत्कथं।
स्वतोवापरतोवाऽस्यसंसारोस्तीतिमेवद ॥ ७१ ॥ शृणुवत्सस्वतोनास्तिसंसारःप्रत्यगात्मनः। किंत्वज्ञाद्यऽविवेकेनसंसारोस्या
विकारिणः ॥ ७२ ॥ घटजन्मादिकंयद्वद्घटाकाशेप्रकल्प्यते। देहजन्मादिकंतद्वत्कूटस्थेत्वयिकल्प्यते ॥ ७३ ॥ साक्षित्वम
पितद्वत्स्यादविद्योपाधिनाऽऽत्मनि। अविद्यामात्रसंयुक्तःसाक्ष्यात्मेतिशिवोक्तितः ॥ ७४ ॥ अतोऽन्तःकरणाध्यासादविद्याया
श्चयोगतः। संसारित्वञ्चसाक्षित्वमात्मनोनतुवस्तुतः ॥ ७५ ॥ बुद्धिकृताऽवच्छेदेनजीवत्वंचितिकेचन। प्राहुस्तच्चप्रतीच्य
न्येबुद्धौचित्प्रतिबिम्बनात् ॥ ७६ ॥ बन्धमोक्षव्यवस्थार्थंप्रतिदेहञ्चभिन्नतां। वदन्त्येकेहिजीवस्यप्राहुश्चान्येतदेकताम् ॥ ७७ ॥
त्वमर्थोदर्शितोह्येवंविस्तराद्वत्सतेमया। अधुनातत्पदार्थंतेब्रुवेश्रुत्यनुसारतः ॥ ७८ ॥ खादिभूतानिजायन्तेयतोद्भूतानिये

नच। यस्मिन्नन्तेचलीयन्तेतद्ब्रह्मेत्यवधारय॥ ७९॥ जन्माद्यस्ययतश्चेतिसूत्रंयस्याहलक्षणम्। तटस्थंसर्वहेतुत्वंतद्ब्रह्म
८०॥ जीवरूपेणदेहेषुप्रवेशोयस्यचेरितः। प्रेरयतिचयोजीवांस्तद्ब्रह्म०॥ ८१॥ जीवान्यश्चापिकर्माणिकारयत्यत्रचेतनः।
तत्प्राक्कर्मानुरोधेनतद्ब्रह्म०॥ ८२॥ यज्ज्ञानेनाखिलज्ञानंछान्दोग्यादिषुकीर्त्तितं। मृदादिबहुदृष्टान्तैस्त०॥ ८३॥ वेद
श्चापियतोजातःसर्वज्ञाच्छ्वाससवत्स्मृतः। महत्तमाज्जगद्योनेस्त०॥ ८४॥ घटादयोयथाऽनन्यामृदादेःस्वस्वकारणात्। तथाज
गद्यतोऽनन्यत्त०॥ ८५॥ ब्रह्मसर्वात्मकंविद्धिसर्वंजगच्चचिन्मयम्॥ ब्रह्मसर्वात्मताज्ञस्यैश्रुतीरपिवदामिते॥ ८६॥ श्रुतयः।
स्वयंब्रह्मास्वयंविष्णुःस्वयमिन्द्रःस्वयंशिवः। स्वयंविश्वमिदंसर्वंस्वस्मादन्यन्नकिञ्चन॥ ८७॥ मरुभूमौजलंसर्वंमरुभूमात्रमेवतत्।
जगत्त्रयमिदंसर्वंचिन्मात्रंहिविचारतः॥ ८८॥ एकंब्रह्मद्वयंब्रह्ममोहोब्रह्मशमादिकम्। दोषोब्रह्मगुणोब्रह्मदमःशान्तंविभुः
प्रभुः। लोकोब्रह्मगुरुर्ब्रह्मशिष्योब्रह्मसदाशिवः॥ ८९॥ सर्वंचखल्विदंब्रह्मनित्यचिद्घनमक्षतम्। नत्वंनाहंनचान्यद्वासर्वं
ब्रह्मैवकेवलम्॥ ९०॥ वाक्यसं०। इत्यादिश्रुतिभिःप्रोक्तायस्यसर्वात्मतेशितुः। सच्चिदानन्दरूपस्यतद्ब्रह्मेत्यवधारय॥ ९१॥

सत्यंज्ञानमनन्तञ्चेत्याहस्वरूपलक्षणं। तैत्तरेयश्रुतिर्यस्यतद्ब्रह्म०॥९२॥ तटस्थलक्षणंचैवंस्वरूपलक्षणंतथा। ब्रह्मण:सोऽस्यते
प्रोक्तंमयावेदप्रमाणत:॥९३॥ तत्त्वमोर्यौहिवाच्यार्थौलक्ष्यार्थश्चगुरोत्वया। विस्तरेणपुराप्रोक्त:सङ्क्षेपात्त्वंपुनर्वद॥९४॥
शृणुसौम्यब्रुवेतेहंतत्त्वमर्थौसमासत:। पुनस्तेसुखबोधार्थंवाक्यार्थंचप्रवृत्तये॥९५॥ चेतनोऽज्ञादिधर्मान्योह्यारोप्यात्मन्यविद्य
या। कर्तृत्वाद्यभिमानीसत्वंपदवाच्यईरित:॥९६॥ सर्वदेहेषुय:प्रत्यग्बोधोदेहादिभासक:। कर्तृत्वादिभिरस्पृष्टोलक्ष्यार्थ
स्त्वंपदस्यस:॥९७॥ वेदवेद्यंजगद्बीजंसर्वज्ञत्वादिधर्मकं। यच्चैतन्यंहितद्विद्धिवाच्यार्थंतत्पदस्यवै॥९८॥ सर्वोपाधिविमुक्तंय
त्कार्यकारणवर्जितम्। निर्विशेषंचिदानन्दंलक्ष्यार्थस्तत्पदस्यतत्॥९९॥ पदानांतत्त्वमादीनांप्रागर्थाःप्रदर्शिता:। वाक्या
र्थबोधसंसिद्ध्यैवाक्यार्थंत्वद्यसंशृणु॥१००॥ तत्त्वमस्यादिवाक्येषुतत्त्वमादिपदार्थयो:। तादात्म्यमेववाक्यार्थोस्त्यखण्डैकरसा
त्मक:॥१॥ प्रत्यग्बोधस्त्वमर्थोय:सोद्वयानन्दरूपक:। तदर्थोयोद्वयानन्द:सप्रत्यग्बोधरूपक:॥२॥ एवंपरस्पराभेदज्ञानंयदा
हिसम्भवेत्। अब्रह्मत्वमनात्मत्वंनिवर्तेतेतदातयो:॥३॥ अखण्डएववाक्यार्थोवाक्यंचाखण्डबोधकम्। त्वंचाखण्डस्वरूपो

सा० सिप्रत्यग्ब्रह्मैक्यविग्रहः ॥ ४ ॥ संसर्गोवाविशिष्टोवावाक्यार्थोनात्रसम्भवेत्। भाष्यवार्त्तिककाराभ्यांतन्निषेधोयतःकृतः ॥
४ ५ ॥ यस्मादखण्डमेवाहतत्त्वमस्यादिकंवचः। नसंसर्गविशिष्टार्थाततोखण्डंविनिश्चिनु ॥ ६ ॥ वाच्यार्थातत्त्वमोर्हित्वालक्ष्यार्थौ
परिगृह्यच। तत्त्वमस्यादिवाक्यंहिसमर्थमैक्यवोधने ॥ ७ ॥ सर्वज्ञत्वाऽल्पवोद्धृत्वेतथाप्रत्यक्परोक्षते। एकस्यहिविरुद्धेतेल
क्षणाऽतःप्रवर्त्तते ॥ ८ ॥ प्रत्यक्षादिविरोधेनशक्यार्थस्यापरिग्रहे। याशक्यार्थेनसंवद्धेवृत्तिःसालक्षणोच्यते ॥ ९ ॥ लक्षणात्रि
विधाप्रोक्ताजहत्यादिप्रभेदतः। तत्त्वमस्यादिवाक्येषुलक्षणाभागलक्षणा ॥ १० ॥ गङ्गायांघोषइत्येवंजहतीहनलक्षणा। भवेन्ना
जहतीचात्रशोणोधावतिवाक्यवत् ॥ ११ ॥ सोयंपुरुषइत्यादिवाक्येष्विवाचकीर्त्तिता। जहदजहदाख्याहिलक्षणावाक्यकोविदैः
॥ १२ ॥ भागलक्षणयाचैवंसोयमित्यादिवाक्यवत्। तत्त्वमस्यादिवाक्यानिवोधयन्त्यैक्यमादरात् ॥ १३ ॥ पदयोरिहसम्बन्धःसा
मानाधिकरण्यकः। पदार्थयोस्तुसम्बन्धोविशेषणविशेष्यता ॥ १४ ॥ लक्ष्यलक्षणसम्बन्धःपदार्थप्रत्यगात्मनां। सम्बन्धैस्त्रिभि ६४
राहैवमखण्डार्थंश्रुतिःस्फुटम् ॥ १५ ॥ एवंतत्त्वमसीत्यादिवाक्यमखण्डवोधकं। अतोचसंशयोनास्तित्वंब्रह्मास्यद्वयंसदा ॥ १६ ॥

त्वंसन्मात्रात्मकःसौम्यपूर्णोऽद्वितीयचिद्घनः । सुखरूपोऽस्यसंसारीमहावाक्यैर्हिलक्षितः ॥ १७ ॥ यथातत्त्वमसीत्यादेरखण्डै
कार्थतोदिता । तथासत्यादिवाक्यानांबोध्याखण्डार्थनिष्ठता ॥ १८ ॥ अखण्डार्थस्यबोधिन्योऽन्याअपिसन्तिभूरिशः । श्रुतयस्ता
वदामीहकाश्चनशृणुवत्सभो ॥ १९ ॥ श्रुतयः । अखण्डैकरसंशास्त्रमखण्डैकरसाचयी । अखण्डैकरसोदेहअखण्डैकरसंमनः ॥ २० ॥
अखण्डैकरसंसूत्रमखण्डैकरसोविराट् । अखण्डैकरसाविद्याअखण्डैकरसोऽव्ययः ॥ २१ ॥ ननिरोधोनचोत्पत्तिर्नबद्धोनचसाध
कः । नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता ॥ २२ ॥ पादाभावाद्गतिर्नास्तिहस्ताऽभावात्क्रियानच । मृत्युर्नास्तिजन्माऽभावाद्बुद्ध्यऽभा
वात्सुखादिकम् ॥ २३ ॥ येनेक्षतेशृणोतीदंजिघ्रतिव्याकरोतिच । स्वाद्वस्वादुविजानातितत्प्रज्ञानमुदीरितम् ॥ २४ ॥
चतुर्मुखेन्द्रदेवेषुमनुष्याश्वगवादिषु । चैतन्यमेकंब्रह्मातःप्रज्ञानंब्रह्ममय्यपि ॥ २५ ॥ परिपूर्णःपरात्माऽस्मिन्देहेविद्याधिकारि
णि । बुद्धेःसाक्षितयास्थित्वास्फुरन्नहमितीर्यते ॥ २६ ॥ स्वतःपूर्णःपरात्माचब्रह्मशब्देनवर्णितः । अस्मीत्यैक्यपरामर्शात्तेन
ब्रह्मभवाम्यहं ॥ २७ ॥ एकमेवाऽद्वितीयंसन्नामरूपविवर्जितम् । सृष्टेःपुराधुनाप्यस्यतादृक्त्वंतदितीर्यते ॥ २८ ॥ श्रोतुर्देहे

सा० न्द्रियाऽतीतंवस्तुत्वंपदेरितम्। एकतागृह्यतेऽसीतितदैक्यमनुभूयताम्॥ २९॥ स्वप्रकाशाऽपरोक्षत्वमयमित्युक्तितोमतम्।
अहङ्कारादिदेहान्तात्प्रत्यगात्मेतिगीयते॥ ३०॥ दृश्यमानस्यसर्वस्यजगतस्तत्त्वमीर्यते। ब्रह्मशब्देनतद्ब्रह्मस्वप्रकाशात्मरूप
कम्॥ ३१॥ मायाऽविद्येविहायैवउपाधीपरजीवयोः। अखण्डंसच्चिदानन्दंपरंब्रह्मविलक्ष्यते॥ ३२॥ आधोरातत्पदार्थःस्या
न्मकारस्त्वंपदार्थवान्। तयोःसंयोजनमसीत्यर्थेतत्त्वविदोविदुः॥ ३३॥ क्षीरंक्षीरेयथाक्षिप्तंतैलंतैलेजलंजले। संयुक्त
मेकतांयातितथात्मन्यात्मविन्मुनिः॥३४॥ घटेनष्टेयथाव्योमव्योमैवभवतिस्वयम्। तथैवोपाधिविलयेब्रह्मैवब्रह्मवित्स्वयम्॥ ३५॥
वाक्यसं०। एवंवाक्यैःपरिज्ञात्वास्वस्यब्रह्मस्वरूपताम्। सर्वथासर्वकालेषुतन्निष्ठस्त्वंभवानघ॥ ३६॥ बहुनाकिमिहोक्तेनसंक्षे
पान्निर्णयंशृणु। अहंब्रह्मजगन्मिथ्यैवेतिज्ञात्वाविमुच्यते॥ ३७॥ जीवस्यब्रह्मणाऽभेदस्त्वयागुरोप्रपञ्चितः। विस्तराज्जगतो
ऽसत्त्वंनोक्तमतस्तुतद्वद॥ ३८॥ शृणुसौम्यवदामितेमिथ्यात्वंजगतोप्यहं। जगन्मिथ्यैवदृश्यत्वाद्रज्जुसर्पादिवत्सदा॥ ३९॥
श्रुतयश्चतथाप्राहुर्जगतोऽसत्स्वरूपताम्। तास्त्वपिशृणुसौम्यत्वंजगतोऽसत्त्ववुद्धये॥ ४०॥ श्रुतयः। प्रपञ्चोयदिविद्येतनिवर्त्तेत

तेनसंशयः । मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः ॥ ४१ ॥ विकल्पोविनिवर्तेतकल्पितोयदिकेनचित् । उपदेशादयंवादोज्ञाते
द्वैतंनविद्यते ॥ ४२ ॥ द्वितीयकारणाभावादनुत्पन्नमिदंजगत् । यथैवेदंनभःशून्यंजगच्छून्यंतथैवहि ॥ ४३ ॥ वन्ध्याकुमारवचने
भीतिश्चेदस्त्विदंजगत् । शशशृङ्गेणनागेन्द्रोमृतश्चेज्जगदस्तितत् ॥ ४४ ॥ मृगतृष्णाजलंपीत्वातृप्तिश्चेदस्त्विदंजगत् । गन्धर्व
नगरेसत्येजगद्भवतिसर्वदा ॥ ४५ ॥ गगनेनीलिमासत्येजगत्सत्यंभविष्यति । मासात्पूर्वंमृतोमर्त्योह्यागतश्चेज्जगद्भवेत् ॥
४६ ॥ गोस्तनादुद्भवंक्षीरंपुनरारोपणेजगत् । ज्वालाग्निमण्डलेपद्मवृद्धिश्चेज्जगदस्त्विदम् ॥ ४७ ॥ ज्ञानिनोहृदयंमूढैर्ज्ञातं
चेदस्त्विदंजगत् । अजाकुक्षौजगन्नास्तिह्यात्मकुक्षौजगन्नहि ॥ ४८ ॥ सर्वथाभेदकलनंद्वैताऽद्वैतंनविद्यते । नास्तिनास्ति
जगत्सर्वंगुरुशिष्यादिकंनहि ॥ ४९ ॥ वाक्यसं० । मिथ्यात्वेजगतःस्वामिन्स्याद्वेदादेर्मृषात्मता । मिथ्याभूतात्ततोज्ञानंब्रह्म
णःस्यात्कथंवद ॥ ५० ॥ शृणुस्वमस्यसिंहेनमिथ्याभूतेनबोधनम् । दृष्टंयथैवनिद्रातोवेदादेःस्यात्तथात्मधीः ॥ ५१ ॥ एवंश्रुत्यादि
भिर्वाक्यैर्ज्ञात्वाजगन्मृषात्मताम् । परिशिष्टश्चयद्ब्रह्मतत्त्वंनेतीतिबोधितम् ॥ ५२ ॥ भगवन्नेतिनेतीतिश्रुतेरप्यर्थमीरय । येन

स्वान्यनिषेधेनाहंविद्यांस्वपरमात्मताम् ॥ ५३ ॥ उच्यतेऽनात्ममात्रस्यनिषेधावधित्वेनयत् । उर्वितंतत्परंब्रह्मनेतिनेतीतिवो
धितम् ॥ ५४ ॥ इतिशब्दद्वयेनाचाखिलंदृश्यमनूद्यते । नकाराभ्यांनिषेधश्चवीप्सयातस्यकथ्यते ॥ ५५ ॥ मूर्त्तंवामूर्त्तमज्ञानंवास
नावाधिदैवतम् । अध्यात्मंवाऽखिलंतद्धिनकाराभ्यांनिषिध्यते ॥ ५६ ॥ वार्त्तिकसारवा० । अहंशब्दोबुद्धिवाचीसाक्षिणंल
क्षयेद्यथा । निषेधकोनकारोपिसाक्षिणंलक्षयेत्तथा ॥ ५७ ॥ ब्रह्मशब्दोजगद्धेतुवाचीचिन्मात्रलक्षकः । इतिशब्दोजगन्मात्रवा
चीचिन्मात्रलक्षकः ॥ ५८ ॥ अखण्डैक्यरसस्तुल्योवाक्यार्थौवाक्ययोर्द्वयोः । उक्तार्थस्यैवदार्ढ्यायद्विर्नेतीतिवचःश्रुतम् ॥ ५९ ॥
अथवाचेतिशब्दौद्वौजीवेशोपाधिवाचिनौ । नकाराभ्यामुपाधिद्वौनिषिध्यब्रह्मलक्ष्यते ॥ ६० ॥ वाक्यसं० । इतिवार्त्तिकसारे
त्वहंब्रह्मास्मीतिवाक्यवत् । तत्त्वमोरैक्यविन्नैतैरयोजितंनेतिनेत्यपि । सर्वथान्यनिषेधेनयच्छिष्टंचित्त्वमेवतत् ॥ ६१ ॥ स्वामि
न्दृश्यनिषेधेनावशिष्टब्रह्मबोधिकाः । श्रुतीश्चापिवदाद्यत्वमितिचेच्छृणुताश्रपि ॥ ६२ ॥ श्रुतयः । कार्योपाधिरयंजीवःकारणो
पाधिरीश्वरः । कार्यकारणतांहित्वापूर्णबोधोऽवशिष्यते ॥ ६३ ॥ यावद्यावन्मुनिश्रेष्ठःस्वयंसन्त्यजतेऽखिलम् । तावत्तावत्परो

लोकःपरमात्मैवावशिष्यते ॥ ६४ ॥ ज्ञेयवस्तुपरित्यागेविलयंयातिमानसम्। मानसेविलयंयातेकैवल्यमवशिष्यते ॥ ६५ ॥ सर्व
वेदान्तसिद्धान्तसारंवच्मियथार्थतः। स्वयंमृत्वास्वयंभूत्वास्वयमेवावशिष्यते ॥ ६६ ॥ वाक्यसं० ॥ यएवंसौम्यजानातिस्वंसदान
न्दचिद्घनम्। विमुच्यतेससंसारादित्यपिश्रुतयोजगुः ॥ ६७ ॥ श्रुतयः। जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चंयत्प्रकाशते। तद्ब्रह्माह
मितिज्ञात्वासर्ववन्धैःप्रमुच्यते ॥ ६८ ॥ ज्ञात्वातंमृत्युमत्येतिनान्यःपन्थाविमुक्तये। तद्ब्रह्माहमितिज्ञात्वाब्रह्मसंपद्यतेतदा ॥ ६९ ॥
तृणाग्रेष्वम्बरेभानौनरनागामरेषुच। यस्तिष्ठतितदेवाहमितिज्ञात्वानशोचति ॥ ७० ॥ तद्ब्रह्मानन्दमद्वन्द्वंनिर्गुणंसत्यचिद्घ
नम्। विदित्वास्वात्मनोरूपंनबिभेतिकुतश्चन ॥ ७१ ॥ भिद्यतेहृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः। क्षीयन्तेचास्यकर्माणितस्मि
न्दृष्टेपराऽवरे ॥ ७२ ॥ प्रियेषुस्वेषुसुकृतमप्रियेषुचदुष्कृतम्। विसृज्यध्यानयोगेनब्रह्माप्येतिसनातनम् ॥ ७३ ॥ यत्रयत्रमृतो
ज्ञानीपरमाक्षरवित्सदा। परब्रह्मणिलीयेतनतस्योत्क्रान्तिरिष्यते ॥ ७४ ॥ स्वायत्तमेकान्तसुखंस्वेप्सितत्यागवेदनं। यस्यदु
ष्करतांयातंधिक्तंपुरुषकीटकम् ॥ ७५ ॥ अतिवर्णाश्रमरूपंसच्चिदानन्दलक्षणं। योनजानातिसोऽविद्वान्कदामुक्तोभविष्यति

सा० ॥७६॥ शास्त्राण्यधीत्यमेधावीअभ्यस्यचपुनःपुनः। परमंब्रह्मविज्ञायउल्कावत्तान्यथोत्सृजेत् ॥ ७७॥ स्वप्नेपियोहिमुक्तःस्याज्जा
६७ ग्रतीवविशेषतः। ईदृक्चेष्टःस्मृतःश्रेष्ठोवरिष्ठोब्रह्मवादिनाम् ॥ ७८ ॥ इहैवसन्तोऽथविद्मस्तद्वयंनचेदवेदिर्महतीविनष्टिः।
यएतद्विदुरमृतास्तेभवन्त्यथेतरेदुःखमेवापियन्ति ॥ ७९ ॥ वाक्यसं०। एवंसौम्यमयातुभ्यंज्ञानान्मोक्षप्रदर्शिकाः। श्रुतयोदर्शि
ताःकिंत्वंभूयःप्रष्टुंहिवाञ्छसि ॥ ८०॥ गुरोर्किंविदुषःकर्मकर्त्तव्यंस्वेष्टलब्धये। तथानिष्टप्रहाणायाऽस्तिनवेत्यद्यमेवद ॥ ८१ ॥
सौम्यनैवास्तिकर्त्तव्यासम्यग्ज्ञानवतःक्रिया। इष्टाऽनिष्टस्यमिथ्यात्वात्किमिच्छेत्किंत्यजेद्बुधः ॥ ८२ ॥ श्रुत्यास्मृत्यापिचार्थोयं
सौम्यस्फुटंप्रदर्शितः। संगृह्याभ्यन्तेप्यद्यतेसंशयस्यच्छित्तये ॥ ८३ ॥ श्रुतिः। नैष्कर्म्येणनतस्यार्थस्तस्यार्थोऽस्तिनकर्मभिः।
नसमाधानजप्याभ्यांयस्यनिर्वासनंमनः ॥ ८४ ॥ स्मृतिः। ज्ञानामृतेनतृप्तस्यकृतकृत्यस्ययोगिनः। नैवास्तिकिञ्चित्कर्त्तव्यमस्ति
चेन्नसतत्त्ववित् ॥ ८५ ॥ वाक्यसं०। बहुनाकिमिहोक्तेनसङ्क्षेपात्त्वमिदंशृणु। विधिनिषेधवार्त्तासुनात्मज्ञानीनियुज्यते ॥ ८६॥ ६७
ननुविधिनिषेधाभ्यांनप्रेर्य्योब्रह्मविद्यदा। यथेष्टाचरणंतस्यतदापतेद्बलादिह ॥ ८७॥ नैवंरागवतोदृष्टंयथेष्टाचरणंयतः।

ब्रह्मविदोविरक्तस्यतत्प्रसक्तिःकुतोभवेत् ॥ ८८ ॥ नैष्कर्म्यसिद्धिकर्तृभिरर्थोयंसुनिरूपितः । तद्वाक्यानिपठामित्वत्कृताऽऽश्चे
निवृत्तये ॥ ८९ ॥ वार्त्तिककृद्वा० । वृद्धाऽद्वैततत्त्वस्ययथेष्टाचरणंयदि । शुनांतत्त्वविदांचैवकोभेदोऽशुचिभक्षणे ॥ ९० ॥
अधर्माज्जायतेज्ञानंयथेष्टाचरणंततः । धर्मकार्यंकथंतत्स्याद्यत्रधर्मोपिनेष्यते ॥ ९१ ॥ क्षुधयापीड्यमानोपिनविषंह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड्जानन्नामूढस्तज्जिघत्सति ॥ ९२ ॥ वाक्यसं० । तस्माद्रागवदज्ञानांयथेष्टाचरणंभवेत् । नैवतद्वीतरागाणां
जीवन्मुक्तमहात्मनां ॥ ९३ ॥ जीवन्मुक्तिस्वरूपंमेजीवन्मुक्तस्यलक्षणम् । तथात्वंकृपयाब्रूहिगुरोश्रुत्यादिमानतः ॥ ९४ ॥ सौम्य
रागादिदोषाणांब्रह्माभ्यासादिनाह्रिया । चित्तातिरष्कृतिःसम्यक्साजीवन्मुक्तिरुच्यते ॥ ९५ ॥ रागादिदोषशून्योयस्त्विन्मात्र
निष्ठमानसः । सर्वत्रसमबुद्धिश्चसजीवन्मुक्तउच्यते ॥ ९६ ॥ श्रुतिस्मृत्यादिवाक्यानिमानान्यत्रैवभूरिशः । सन्तितेषुश्रुतीस्ता व
त्समासतोवदामिते ॥ ९७ ॥ श्रुतयः । अहंब्रह्माऽस्म्यहंब्रह्मास्म्यहंब्रह्मेतिनिश्चयः । चिदहंचिदहंचेतिसजीवन्मुक्तउच्य
ते ॥ ९८ ॥ मौनवान्निरहंभावोनिर्मानोमुक्तमत्सरः । यःकरोतिगतोद्वेगःस० ॥ ९९ ॥ सर्वेच्छाःसकलाःशङ्काःसर्वेहाःसर्वनि

सा० ९८

श्रया:। धियायेनपरित्यक्ता:स०॥२००॥ यस्यनाहङ्कृतोभावोबुद्धिर्यस्यनलिप्यते। कुर्वतोऽकुर्वतोवापिस०॥१॥ यावतीदृश्य
कलनासकलेयंविलोक्यते। सायेनसुष्ठुसन्त्यक्तास०॥२॥ साधुभि:पूज्यमानोपिपीड्यमानोपिदुर्जनै:। सममेवभवेद्यस्यस०॥
३॥ देहेन्द्रियेष्वहंभावइदंभावस्तदन्यके। यस्यनभवत:क्वापिस०॥४॥ वाक्यसं०। एवंश्रुतिवचोभिस्तेजीवन्मुक्तस्यलक्षणम्।
मयेहदर्शितंसौम्यस्मृतिवाक्यान्यथब्रुवे॥५॥ भारतवा०। प्रजहातियदाकामान्सर्वान्पार्थमनोगतान्। आत्मन्येवात्मनातुष्ट:
स्थितप्रज्ञस्तदोच्यते॥६॥ अहेरिवगणाद्भीत:सौहित्यान्नरकादिव। कुणपादिवय:स्त्रीभ्यस्तंदेवाब्राह्मणंविदु:॥७॥ काम
क्रोधाऽनृतद्रोहलोभमोहमदादय:। नसन्तियस्मिन्राजेन्द्रतंदेवा०॥८॥ नजाति:कारणंतातगुणा:कल्याणकारणं। वृत्तस्थ
मपिचाण्डालंतं०॥९॥ पठका:पाठकाश्चैवयेचान्येशास्त्रचिन्तका:। सर्वेव्यसनिनोमूर्खायःक्रियावान्सपण्डित:॥१०॥ सूत
संहितावाक्यं। विनष्टदिग्भ्रमस्यापियथापूर्वंविभातिदिक्। तथाविज्ञानविध्वस्तंजगन्मेभातितन्नहि। इतियोवेदवेदान्तै:सो
तिवर्णाश्रमीभवेत्॥११॥ वाक्यसं०। वशिष्ठेनापिसंप्रोक्तंजीवन्मुक्तस्यलक्षणम्। तथातन्महिमाचोक्तस्तद्वाक्यान्यपिमेशृणु॥

९८

१२ ॥ वाशिष्ठवा०। येतुविज्ञातविज्ञेयास्तादृशाःपातनाशयाः। जानन्तितांस्तएवान्तरहैःपादानिवाहय: ॥ १३ ॥ भावंनि
गूहयन्त्येतेतमुत्तममनुत्तमाः। ग्राम्यैर्धनैःकिलाऽनर्घ्यःकश्चिन्तामणिरापणे ॥ १४ ॥ तस्मिन्निगूहनेभावोयतस्तेषांदिदृक्षने।
निर्वासनागतद्वैतागतमानाःकिलाङ्गते ॥ १५ ॥ एकान्ताऽमानदौर्गत्यजनाऽवज्ञमयस्तुतान्। सुखयन्तियथारामनतथैवमहर्द्धयः।
१६ ॥ गुणांममेमंजानातुजनःपूजांकरोतुमे। इत्यहङ्कारिणामीहानतुतन्मुक्तचेतसां ॥ १७ ॥ शीताऽऽतपादिदुःखानिनिज
देहगतान्यपि। अन्यदेहगतानीवज्ञःपश्यत्यवहेलया ॥ १८ ॥ परमात्मनिविश्रान्तंयस्यव्यावृत्त्यनोमनः। रमतेस्मिन्मुनदृश्येस
जीवन्मुक्तउच्यते ॥ १९ ॥ एकएवविशेषोस्यनसमोमूढबुद्धिभिः। सर्वत्राऽऽस्थापरित्यागान्नीरागममलंमनः ॥ २० ॥ यस्याऽनु
भवपर्यन्तावुद्धिस्तत्त्वेप्रवर्त्तते। तद्दृष्टिगोचराःसर्वेमुच्यन्तेसर्वपातकैः ॥ २१ ॥ वाक्यसं०। यःसमाधिंसदाऽऽश्रित्यस्वस्वरू ......
स्थितः संशान्तसर्वसङ्कल्पःसजीवन्मुक्तउच्यते ॥ २२ ॥ जीवन्मुक्त ...... द। स्वरूपावस्थितंश्चापितद्वद
श्रु ...... २३ ध्यातृध्यानेपरित्यज्यनिर्वातस्थप्रदीपवत्। ध्ये ...... माधिरुच्यते ॥ २४ ॥ समाधे

सा० लक्षणंसौम्यस्वरूपावस्थितेस्तथा। लक्षणंश्रुतिभिःप्रोक्तंयाभिस्ताश्चापिमेशृणु ॥ २५ ॥ श्रुतयः। अहमेवपरंब्रह्मब्रह्माहमिति संस्थितिः। समाधिःसतुविज्ञेयःसर्ववृत्तिनिरोधकः ॥ २६ ॥ ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिंविना। संप्रज्ञातसमाधिः स्याद्ध्यानाऽभ्यासप्रकर्षतः ॥ २७ ॥ प्रशान्तवृत्तिकंचित्तंपरमानन्ददीपकम्। असंप्रज्ञातनामाऽयंसमाधिर्योगिनांप्रियः ॥ २८ ॥ संशान्तसर्वसङ्कल्पायाशिलावदवस्थितिः। जाग्रन्निद्राविनिर्मुक्तासास्वरूपावस्थितिःपरा ॥ २९ ॥ सरूपोऽसौमनोनाशोजीव न्मुक्तस्यविद्यते। निदाघाऽरूपनाशस्तुवर्त्ततेऽदेहमुक्तके ॥ ३० ॥ वाक्यसं०। समाधिलक्षणंसौम्यमयैवंतेप्रदर्शितम्। श्रुति वाक्यप्रमाणेनश्रोतुंवाञ्छसिकिंपुनः ॥ ३१ ॥ गुरोर्विदेहमुक्तेस्त्वंलक्षणंमेवदाधुना। तथाविदेहमुक्तस्यलक्षणंश्रुतिमानतः ॥ ३२ ॥ शृणुसौम्यवदाम्यद्यत्वयापृष्टंक्रमादहं। प्रारब्धकर्मणांनाशेभोगेनाङ्गनयक्षये ॥ ३३ ॥ जीवन्मुक्तिपदंहित्वायापूर्णात्मतयास्थि तिः। ज्ञानिनःसाविदेहाख्यामुक्तिःश्रुतिभिरीरिता ॥ ३४ ॥ ब्रह्मैवाहंसदानन्दइतिचिन्ताप्रियस्यन। यस्मिन्मात्रतयासंस्थः सविदेहःसमीरितः ॥ ३५ ॥ मानानिश्रुतयःसन्त्यत्रवशिष्ठवचांस्यपि। श्रुतीस्तावत्पठामीहवशिष्ठोक्तीस्ततःपरम् ॥ ३६ ॥

श्रुतयः। विदेहमुक्तौविमलेपदेपरमपावने। विदेहमुक्तिविषयेतस्मिन्सत्त्वक्षयात्मके ॥ ३७ ॥ चित्तनाशेविरूपाख्येनकिञ्चि
दिहविद्यते। नगुणानागुणास्तत्रनश्रीर्नाऽश्रीर्नचैकता ॥ ३८ ॥ शास्त्रेणनश्येत्परमार्थदृष्टिः कार्यक्षमंनश्यतिचाऽपरोक्षात्।
प्रारब्धनाशात्प्रतिभाननाश एवंत्रिधानश्यतिचात्ममाया ॥ ३९ ॥ जीवन्मुक्तिपदंत्यक्त्वास्वदेहेकालसात्कृते। विशत्यऽदेहमुक्ति
त्वंपवनोऽस्पन्दतामिव ॥ ४० ॥ व्यपगतकलनाकलङ्कशुद्धेस्वयममलात्मनिपावनेपदेऽसौ। सलिलकणइवाम्बुधौमहात्माविगलि
तवासनमेकतांजगाम ॥ ४१ ॥ इदंचैतन्यमेवेतिअहंचैतन्यमित्यपि। इतिनिश्चयशून्योयोवैदेहीमुक्तएवसः ॥ ४२ ॥ यस्यप्रप
ञ्चभानंनब्रह्माकारमपीहन। अतीताऽतीतभावोयोवै० ॥ ४३ ॥ जीवात्मापरमात्मेतिचिन्तासर्वविवर्जितः। सर्वसङ्कल्पही
नात्मावै० ॥ ४४ ॥ वशिष्ठवा०। द्विविधश्चित्तनाशोस्तिसरूपोऽरूपएवच। जीवन्मुक्तौसरूपःस्यादरूपोऽदेहमुक्तिके ॥ ४५ ॥
सुखदुःखादयोधीरंसाम्यान्नप्रोद्धरन्तियम्। निःश्वासाइवशैलेन्द्रंचित्तंतस्यमृतंविदुः ॥ ४६ ॥ भूयोजन्मविनिर्मुक्तंजीवन्मुक्तस्य
तन्मनः। सरूपोसौमनोनाशोजीवन्मुक्तस्यचोच्यते ॥ ४७ ॥ अरूपस्तुमनोनाशोयोमयोक्तोरघूद्वह। विदेहमुक्तावेवासौवि

मु० सा० द्यतेनिष्कलात्मकः ॥ ४८ ॥ वाक्यसं०। एवंविदेहमुक्तेस्तेविदेहस्यचलक्षणम्। मानंचापितयोस्तद्वत्संक्षेपात्सौम्यदर्शितम् ॥
७० ४९ ॥ प्राक्चसौम्यमयोक्तंतेतत्त्वद्वाक्यप्रमाणतः। पदार्थशुद्धिमारभ्यसफलंतत्त्वदर्शनम् ॥ ५० ॥ मयोक्तस्यार्थजातस्यत्वयाम
ननंकृतं। त्वद्वाक्यैःश्रुतिवाक्यैश्चतत्सर्वंमेनिवेदय ॥ ५१ ॥ स्वामिन्मेमतिवाक्यानितुभ्यंनिवेदयाम्यहम्। स्वबोधस्यैवदार्ढ्यार्थंनमे
पाण्डित्यख्यातये ॥ ५२ ॥ नैवाऽहंस्थूलदेहोस्मिकूटस्थैकस्वभावतः। सूक्ष्मदेहस्तथानाहंबुद्ध्यादीनांयतोस्मिदृक् ॥ ५३ ॥ तथा
कारणदेहोपिनैवाहंचिद्घनोयतः। तस्माद्देहत्रयद्रष्टातद्धर्मैरहितोस्म्यऽहम् ॥ ५४ ॥ अस्तिभातिप्रियत्वेनसर्वत्राहमवस्थि
तः। नामरूपादिकंसर्वंमय्यऽध्यस्ततयानसत् ॥ ५५ ॥ एकःप्रत्यक्स्वरूपोस्मिसर्वदेहेषुचेतनः। परंब्रह्माहमेवास्म्यहंब्रह्मा
स्मीतिवाक्यतः ॥ ५६ ॥ श्रुतयः। ब्राह्मण्यंकुलगोत्रेचनामसौन्दर्यजातयः। स्थूलदेहगताएतेस्थूलाद्भिन्नस्यमेनहि ॥ ५७ ॥
क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः। लिङ्गदेहगताएतेह्यऽलिङ्गस्यनविद्यते ॥ ५८ ॥ जडत्वप्रियमोदत्वधर्माःकार
णदेहगाः। नसन्तिममनित्यस्यनिर्विकारस्वरूपिणः ॥ ५९ ॥ चिद्रूपत्वान्नमेजाड्यंसत्यत्वान्नानृतंमम। आनन्दत्वान्नमेदुःख ७

मज्ञानाद्भातिसत्यवत् ॥ ६० ॥ अनात्मदृष्टेरविवेकनिद्रा महंममस्वप्नगतिंगतोहम्। स्वरूपसूर्येऽभ्युदितेस्फुटोक्तै गुरोर्म
हावाक्यपदैःप्रबुद्धः ॥ ६१ ॥ आत्मानमञ्जसावेद्मिक्काप्यऽज्ञानंपलायितं। कर्तृत्वमद्यमेनष्टंकर्त्तव्यंवापिनक्कचित् ॥ ६२ ॥ नमे
बन्धोनमेमुक्तिर्नशास्त्रंनमेगुरुः। मायामात्रविकारत्वान्मायाऽतीतोहमद्वयः ॥ ६३ ॥ देवार्चनस्नानशौचभिक्षादौवर्त्ततांवपुः।
तारंजपतुवाक्तद्वत्पठत्वाम्नायमस्तकं ॥ ६४ ॥ विष्णुंध्यायतुधीर्यद्वाब्रह्मानन्देविलीयताम्। साक्ष्यहंकिंचिदप्यत्रनकुर्वेनचका
रये ॥ ६५ ॥ किंकरोमिक्कगच्छामिकिंगृह्णामित्यजामिकिं। यन्मयापूरितंविश्वंमहाकल्पाम्बुनायथा ॥ ६६ ॥ वाक्यसं०। भो
भगवन्मयायैस्तुस्वतत्त्वंमननीकृतं। निवेदितानितानितेमन्मननवचांसिवै ॥ ६७ ॥ त्वद्वाक्यैश्चमयाबुद्धंब्रह्मात्मैक्यंगुरोधुना।
तेनाज्ञानंचमेनष्टंप्राङ्नित्यबोधपीडितम् ॥ ६८ ॥ श्रवणादित्रिभिर्नष्टाःप्रतिबन्धाश्चतेत्रयः। गुरोमेसंशयाद्यायेपुरुषापराधा
त्त्वयाः ॥ ६९ ॥ ज्ञानेनाऽज्ञाननाशान्मेतथाऽहङ्कारनाशतः। सञ्चितक्रियमाणानिकर्माण्यपगतानिमे ॥ ७० ॥ प्रारब्धाख्यानि
कर्माणितुभोगेनविनानमे। यावन्नष्टानितावत्त्वंवन्द्योसिमेसदागुरो ॥ ७१ ॥ गुरुशिष्यादिभावोपियद्यपिवस्तुदृष्टितः। नास्ति

मू० सा० टी० ७१

गुरोतथाप्यस्तिव्यवहारदृष्ट्यातुस: ॥ ७२ ॥ यावदायुस्त्वयोवन्द्योवेदान्तोगुरुरीश्वर: । आदौविद्याप्रसिद्ध्यर्थंकृतघ्नत्वापनुत्तये।
इतितेनित्यवन्द्यत्वंशिववाक्यंगुरोजगौ ॥ ७३ ॥ स्वामिंस्त्वहन्त्वबोधेनकृतकृत्योस्मियद्यपि । भवदाज्ञांकरिष्येऽहंतथापिजन
कादिवत् ॥ ७४ ॥ यद्येवंतर्हिमेत्वंभोस्वानुभवंनिवेदय । येनतेऽहंविजानीयांदार्ढ्यादार्ढ्येचबोधगे ॥ ७५ ॥ गुरोममानुभूति
तेतावन्निवेदयाम्यहम् । तत्रचश्रुतिवाक्यानिवदिष्यामिततस्तथा ॥ ७६ ॥ गुरोस्म्यहंपरंब्रह्मनित्यमुक्तोहमद्वय: । शुद्धोबुद्धो
स्मिचिन्मात्रोनित्यानन्दोनिरामय: ॥ ७७ ॥ परिपूर्णोस्मिसर्वत्रसच्चिदानन्दविग्रह: । जाग्रदादित्रयाऽध्यक्ष:कूटस्थ:सर्वदृक्स
दा ॥ ७८ ॥ निर्विशेषोनिराकारोनिरंशोहंनिरञ्जन: । निर्गुणोनिर्मल:शान्तोऽसंगोऽस्म्यहंसदाऽभय: ॥ ७९ ॥ स्वयंप्रकाश
रूपोहंकेवलानन्दविग्रह: । केवलज्ञानरूपोहंकेवलसत्स्वरूपक: ॥ ८० ॥ अविद्याकार्यहीनोहंबन्धमोक्षौनमेक्वचित् । काल
त्रयविमुक्तोहंदेहादिरहितोस्म्यहम् ॥ ८१ ॥ षडूर्मिरहितोहंवैषट्कौशिकाश्रमेनहि । षड्विकारविहीनोहंसदानन्दघनो
स्म्यहम् ॥ ८२ ॥ वेदवेद्यमहंविद्वन्वेदागायन्तिमांसदा । वेदवाक्यानिमानानिसन्त्यत्रार्थेगुरोतथा ॥ ८३ ॥ श्रुतय: । मय्येव

सकलंजातंमयिसर्वंप्रतिष्ठितं। मयिसर्वंलयंयातितद्ब्रह्माद्वयमस्म्यहम्॥ ८४॥ अहंशिष्यवदाभामिह्यहंलोकत्रयाश्रयः।
अहंकालत्रयातीतोह्यहंवेदैरुपासितः॥ ८५॥ अहंशास्त्रेणनिर्णीतःअहंचित्तेव्यवस्थितः। आनन्दघनएवाहमहंब्रह्मास्मि
केवलम्॥ ८६॥ आत्मनात्मनितृप्तोऽस्मिह्यरूपोह्यहमव्ययः। आकाशादपिसूक्ष्मोहमाद्यन्ताऽभाववानहम्॥ ८७॥ ब्रह्मैवा
हंसर्ववेदान्तवेद्यं नाहंवेद्यंव्योमवातादिरूपं। रूपंनाहंनामनाहंनकर्म ब्रह्मैवाहंसच्चिदानन्दरूपं॥ ८८॥ त्रिषुधामसुय
द्भोज्यंभोक्ताभोगश्चयद्भवेत्। तेभ्योविलक्षणःसाक्षीचिन्मात्रोहंसदाशिवः॥ ८९॥ नित्यशुद्धोविबुद्धमुक्तस्वभावः सत्यःसूक्ष्मःस
न्विभुश्चाद्वितीयः। आनन्दाब्धिर्यःपरस्सोहमस्मि प्रत्यग्धातुर्नात्रसंशीतिरस्ति॥ ९०॥ अहमेवमहानात्माह्यहमेवपरात्परः।
अहमन्यवदाऽऽभामिह्यहमेवशरीरवान्॥ ९१॥ सर्वाधिष्ठानरूपोस्मिसर्वदाचिद्घनोस्म्यहं। चित्तवृत्तिविहीनोहंचिदात्मैक
रसोस्म्यहम्॥ ९२॥ वाक्यसं०। मेऽनुभववचांस्येवंतथावेदवचांस्यपि। स्वज्ञानदार्ढ्यविज्ञप्त्यैमयाऽर्पितानितेगुरो॥ ९३॥
इतःपरंमयाकार्यंयत्तद्वाच्यंत्वयापुनः। वत्सत्वंकृतकृत्योसियस्यानुभवईदृशः॥ ९४॥ तीर्णस्त्वयाचदुःखाब्धिस्त्वकार्यंनशिष्य

ते। तथाफलंत्वयालब्धंशरणाऽऽगमनस्यमे ॥ ९५ ॥ यावत्प्रारब्धशेषस्तेतावत्त्वंवत्सवायुवत्। जीवन्मुक्तश्चरन्भूमौप्रारब्धान्तेविमोक्ष्यसे ॥ ९६ ॥ गुरुशिष्योक्तिसंस्थाजादेवंरामप्रसादतः। जातंप्रकरणंपूर्णंपञ्चमंज्ञाननामकम् ॥ ९७ ॥ अयंमुमुक्षुसर्वस्वसाराभिधोनिबन्धकः। बृहन्मुमुक्षुसर्वस्वान्निबन्धादुद्धृतोमया ॥ ९८ ॥ सङ्क्षेपःस्वल्पबुद्धीनांमुमुक्षूणांहितेच्छया। सारंबृहन्निबन्धानांसङ्क्षेपाज्ज्ञातुमिच्छताम् ॥ ९९ ॥ बृहन्मुमुक्षुसर्वस्वपाठोत्राक्तिहिभूरिशः। सङ्क्षेपेणतथाऽन्योपिपाठोत्रास्तीतिबुध्यताम् ॥ ३०० ॥ समाप्तश्चनिबन्धोयंरामोमेशप्रसादतः। सौम्यकाश्याःसमीपेश्रीभागीरथ्यास्तटेशुभे ॥ ३०१ ॥ श्रीमद्रामंगुरुंचापिभिक्षुंभावेशनामकं। नमामिदण्डवद्भक्त्याऽहमष्टाङ्गैःपुनःपुनः ॥ ३०२ ॥ १६४१ ॥ इतिश्रीमुमुक्षुसर्वस्वसारसङ्ग्रहाख्येनिबन्धेसफलज्ञाननिरूपणान्वितंपञ्चमंज्ञानाख्यंप्रकरणंसमाप्तम् ॥

समाप्तश्चाखिलोयंग्रन्थः।

सौम्यकाश्याःसमीपेऽयंधनीरामद्विजेनवै। ग्रन्थःसंलिखितोमुक्तेरीशस्यद्यौःसरित्तटे ॥

सम्वत्सर १९१३ वैशाखसितषष्ठ्यां ६।

| पत्र | श्लोक | अशुद्धं | शुद्धं | पत्र | श्लोक | अशुद्धं | शुद्धं | पत्र | श्लोक | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ४ | चिकीषा | चिकीर्षा | ४ | ७४ | श्रुतिवाध्या | श्रुतिर्बाध्या | ७ | ४८ | संयागस्य | संयोगस्य |
| २ | १२ | वाध्यवाधक | बोध्यबोधक | ५ | ७७ | कत्तृत्वा | कर्त्तृत्वा | ७ | ५१ | स्मृत्वा | स्मृत्वा |
| २ | १२ | चक्येन | चैक्येन | ६ | ८० | समुस्थिता: | समुत्थिता: | ८ | ५२ | ह्यादेहि | ह्यादेर्हि |
| २ | २२ | कत्ता | कर्त्ता | ६ | ८१ | सवस्वसार | सर्वस्वसार | ८ | ५६ | कमाणय | कर्माणय |
| ३ | २० | समथ | समर्थ | ६ | १५ | प्राणा: | प्राणै: | ८ | ५९ | ज्ञाना | ज्ञाना |
| ३ | २५ | सूय | सूर्यै | ७ | २१ | प्राणै | प्राणै: | ८ | ६० | प्रवत्तते | प्रवर्त्तते |
| ४ | ३६ | सकाया | सकार्या | ७ | २२ | गृह्णीया | गृह्णीया | ८ | ६९ | स्मतिभि: | स्मृतिभि: |
| ४ | ६७ | सर्वभावानां | स्वमभावानां | ७ | ४३ | दशध्वज ठेश | दशध्वजवेश | ८ | ७५ | निविषयं | निर्विषयं |

शुद्धिपत्रम्।



| पत्र | श्लोक | अशुद्ध | शुद्धं | पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ७७ | तर्हि | तर्हिं | ११ | १४६ | दिग्धत्वं | दिग्धृत्वं | १२ | ५ | स्यैव | स्यैवं |
| ९ | ९५ | वृह्म | वृह्म | ११ | १२७ | विष्णोना | विष्णोर्नां | १३ | १३ | वसिष्टेन | वशिष्टेन |
| ९ | ८९ | प्रयेण | प्रायेण | ११ | १२८ | कृष्न | कृष्ण | १३ | १४ | वासिष्ट | वाशिष्ठ |
| ९ | ९९ | विश्नुपु० | विष्णुपु० | ११ | १२९ | सववेदेषु | सर्ववेदेषु | १३ | २० | तृष्ननानां | तृष्णानां |
| १० | ११३ | भजते | भजते | ११ | १३८ | सत्व | सत्त्व | १४ | ३९ | कथंनाववुध्यसे | कथंत्वंनाववुध्यसे |
| १० | ११९ | विश्नौ | विष्णौ | ११ | १४५ | लक्षणं | लक्ष्म | १४ | ५० | रग | राग |
| १० | १२० | विश्नौ | विष्णौ | १२ | १५० | विश्न्वी | विष्ण्वी | १४ | ५३ | रग | राग |
| ११ | १२६ | विश्नोर्वै | विष्णोर्वै | १२ | २ | तस्यैव | तस्यैव | १४ | ५६ | वसिष्टो | वशिष्ठो |

| पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १४ | ५७ | तृश्नत्वं | तृष्णत्वं | १६ | ९२ | त्याववाडितः | त्यैवावताडितः | १८ | ४० | वासिष्टे | वाशिष्ठे |
| १४ | ५९ | दर्शकाः | दर्शिकाः | १६ | ९३ | यंत्रनिष्पिष्टः | यंत्रविनिष्पिष्टः | १८ | ४६ | वासिष्ट | वाशिष्ठ |
| १४ | ६० | स्फाटम् | स्फुटम् | १६ | १०१ | वासिष्टे | वाशिष्ठे | १८ | ५१ | रतिमात्र | रतिमत्र |
| १४ | ६१ | चिता | चिंता | १६ | १०३ | चलत्तृश्नग् | चलतृष्णाग् | १९ | ५८ | वासिष्ठ | वाशिष्ठ |
| १५ | ७० | तीतासु | गीतासु | १६ | ९ | धिगस्तुपुनः | धिगस्त्वेवपुनः | १९ | ६० | प्रवृषीव | प्रावृषीव |
| १५ | ७० | वचांस्यनु | वचांस्यप्यनु | १७ | ३ | पुष्यर्थं | पुष्यर्थं | १९ | ६५ | सपः | सर्पः |
| १५ | ७३ | परं | परः | १७ | २९ | दृकतदा | दृक्सदा | १९ | ६७ | वार्द्धिक्ये | वार्द्धक्ये |
| १५ | ८३ | शुश्रोचत्यथ | शुश्रोचित्यथ | १८ | ३४ | मर्हनादिकं | मर्द्दनादिके | १९ | ७३ | वर्तमेव | वर्त्मैव |

शुद्धिपत्रम्।

| पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १९ | ६९ | वाड्विक्या | वाड्वक्या | २० | २०१ | सरोय | सरोयं | २४ | ८४ | पटु | पटुः |
| १९ | ८० | पूव | पूर्व | २२ | ३९ | कृष्णैर्विकैश्चैः | कृष्णैर्विकैश्चैः | २४ | ९२ | वासिष्ट | वाशिष्ठ |
| २० | ८२ | वर्हदासं | वर्हस्वदासं | २२ | ४२ | मृत्वा | मृत्वा | २४ | ९६ | क्रव्यदाः | क्रव्यादाः |
| २० | ८६ | वासिष्ट | वाशिष्ठ | २३ | ५५ | कर्हि | कर्हिं | २५ | ११ | तक्त्वा | त्यक्त्वा |
| २० | ९५ | वासिष्ट | वाशिष्ठ | २३ | ७१ | नारद | नारदो | २५ | २२ | चिंन्ता | चिन्ता |
| २० | ९६ | वासिष्ट | वाशिष्ठ | २३ | ७३ | वासिष्टे | वाशिष्ठे | २५ | २४ | शीतलादीन् | श्वादीन् |
| २० | १०० | १०० | २०० | २४ | ४९ | मूर्ति | मूर्तं | २५ | २४ | दीर्प्ते | दीप्त |
| २० | २४१ | मृत्यु | मृत्यु | २४ | ८० | स्त्रीसंमिना | स्त्रीसंगिनां | २५ | ३०१ | भवा वे: | भवा ब्धेः |

| पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| २६ | २८ | स्ववत्तान्तं | स्ववृत्तान्तं |
| २६ | ३७ | यतास्यत: | यतोस्यत: |
| २६ | ३८ | पविशति | प्रविशति |
| २७ | ४८ | नमोच्चाय | नैवमोच्चाय |
| २७ | ७१ | वासिष्ट | वाशिष्ट |
| २८ | ८३ | वैरञ्चाप्रयच्छत: | वैरंचास्या० |
| श्रीराम | | श्रीराम | श्रीराम |
| २९ | १७ | विटङ्किमे: | विट्ङ्कि० |

| पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३० | ३४ | वासिष्टे | वाशिष्ठे |
| ३० | ३५ | वासिष्टवा | वाशिष्ठ० |
| ३० | ४१ | इत्यक्त्वा | इत्युक्त्वा |
| ३१ | ५६ | वासिष्ट | वाशिष्ठ |
| ३१ | ६४ | विपयांश्च | विषयांश्च |
| ३२ | ७३ | वसिष्टेन | वशिष्ठे० |
| ३२ | ७४ | श्रीवसिष्टेन | श्रीव० |
| ३२ | ७५ | वाशिष्टवा | वाशिष्ठ० |

| पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३२ | ७७ | परिविलीयते | परिलीय० |
| ३२ | ८४ | स्वात्मानं | स्वमात्मानं |
| ३३ | ९६ | योथिनो | योर्थिनो |
| ३३ | ९६ | वासिष्टवा | वाशिष्ठ० |
| ३३ | २ | बुधे: | बुधै: |
| ३३ | ८ | शांत्त | शान्त |
| ३४ | २८ | प्रत्यत | प्रत्युत |
| ३६ | १ | साधन | साधनै: |

शुद्धिपत्रम्।

| पत्र | श्लोक | अशुद्धं | शुद्धं | पत्र | श्लोक | अशुद्ध | शुद्ध | पत्र | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ४० | ९० | षडङ्गान | षङ्गान | ४६ | ४५ | मुखः | मुखः | ६० | ११ | चेक्यं | चैक्यं |
| ४० | ९५ | स्फाटं | स्फुटं | ४८ | ८० | तुन्या | तुल्या | ६३ | ८१ | तद्ब्रह्मे | तद्ब्रह्मे |
| ४० | ३ | सद्गाव | सद्भाव | ५२ | ६२ | भिक्षुन | भिक्षुर्न | ६३ | ६८ | धमा | धर्मौ |
| ४१ | १८ | निषच्छुति | निषच्छ्रुति | ५४ | ११ | कृच्छाणि | कृच्छ्राणि | ६४ | ७ | वाच्याथा | वाच्याथा |
| ४३ | ६६ | विशीणा | विशीर्णा | ५५ | २९ | भिक्षुवि | भिक्षुर्वि | ६५ | १७ | वाक्यहि | वाक्यैर्हि |
| ४५ | १२ | द्वोवा | द्वौवा | ५६ | ५६ | ऊद्धृत्य | उद्धृत्य | ६५ | २९ | श्रोतुदहे | श्रोतुर्देहे |
| ४५ | २२ | चेक | चैक | ५८ | ५ | चाये | चायैं | ७० | ५४ | तद्धम | तद्धर्मैं |
| ४६ | ३० | येचेव | येचैव | ५८ | ५७ | नियमाय | नियमाये | ७१ | ७९ | निर्गुणा | निर्गुणो |
| | | | | | | | | ७१ | ७१ | भागेन | भोगेन |

इति श्रीमुमुक्षुसर्वस्वसारसङ्ग्रहा
भिधोग्रन्थः समाप्तः